तवै युगपत् ।' (**पा.** 6.1.200) इत्याद्यन्तयोर्युगपदुदात्तत्वम् । 'शृहिंसायाम्' इत्यस्मात् 'शृस्वृस्निहि' (उ. 1.10) इत्यादिना उप्रत्ययः । क्रियाग्रहणं कर्तव्यम् इति कर्मणः संप्रदानत्वाच्चतुर्थी । उशब्दः पूरकः । अहम् एव समदम् । समानं माद्यन्त्यस्मिन्निति समत्संग्रामः । स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव कृणोमि करोमि । तथा द्यावापृथिवी दिवं च पृथिवीं चान्तर्यामितया अहम् एव विवेश प्रविष्टवती ।

**अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्व१न्तः समुद्रे ।**
**ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥7॥**

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे । ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥7॥

द्यौः पिता (**तै. ब्रा.** 3.7.5.4) इति श्रुतेः पिता द्यौः पितरं दिवम् अहं सुवे प्रसुवे जनयामि । 'आत्मन आकाशः संभूतः' (**तै. आ.** 8.1) इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनः मूर्धन्युपरि । कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्द्रवन्त्यस्मादाभूतजातानीति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद्ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूता अहमस्मि ततः हेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविष्य वि तिष्ठे । विविधं व्याप्य तिष्ठामि । 'समवप्रविभ्यः स्थः' (**पा.** 1.3.22) इत्यात्मनेपदम् ॥ उत अपि च अमूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम् । उपलक्षणमेतत् । एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि । यद्वा । अस्य भूलोकस्य मूर्धन् मूर्धन्युपर्यहं पितरमाकाशं सुवे । समुद्रे जलधावप्सूदकेष्वन्तर्मध्ये मम योनिः कारणभूताऽम्भृपाख्य ऋषिर्वर्तते । यद्वा । समुद्रेऽन्तरिक्षेऽप्स्वम्मयेषु देवशरीरेषु मम योनिः कारणभूतो ब्रह्म चैतन्यं वर्तते । ततोऽहं कारणात्मिका सती सर्व भुवनानि व्याप्नोमि । अन्यत्समानम् ॥

### ii. ऋग्वेदः ( x. 71-4 & x- 17-2 ) भगवतः पतञ्जलेः महाभाष्यप्रारम्भे उद्धृतौ विवृतौ च मन्त्रौ

**उत त्वः पश्यन्न ददर्श वाच-**
**मुत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे**
**जायेव पत्य उशती सुवासाः॥ [ऋ. सं. X. 71. 4]**

'उत त्वः' अपि खल्वेकः पश्यन्नपि वाचम्, अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामित्यविद्वांसमाहार्धम्। 'उतो त्वस्मै तन्वं विसस्रे' तनुं विवृणुते। 'जायेव पत्य उशती सुवासाः।' तद् यथा जाया पत्ये कामयमाना सुवासाः स्वम् आत्मानं विवृणुते, एवं वाग् वाग्विदे स्वात्मानं विवृणुते। वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम्।

**सक्तुमिव तितउना पुनन्तो**
**यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जानते**
**भद्रैषां लक्ष्मीर्निहिताधि वाचि॥ (ऋ. सं. X. 17.2)**

सक्तुः सचतेर्दुर्धावो भवति, कसतेर्वा विपरीताद् विकसितो भवति। तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा। 'धीरा' ध्यानवन्तः 'मनसा' प्रज्ञानेन। 'वाचमक्रत' वाचमकृषत। 'अत्रा सखायः सख्यानि जानते' अत्र सखायः सन्तः सख्यानि जानते। क्व? य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः। के पुनस्ते? वैयाकरणाः। कुत एतत्? 'भद्रैषाम्' एषां वाचि भद्रा लक्ष्मीर्निहिता भवति। लक्ष्मीर्लक्षणाद्भासमानात् परिवृढा भवति।

## 4. विद्याप्रशंसा

### i. यास्केन 'निरुक्त' प्रारम्भे समुद्धृताः श्रुतयः (टीकाकारः–स्कन्दस्वामी)

एतमेवार्थमितिवृत्तार्थवादेन प्ररोचयन्नाह–

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।**
**असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥**

चतुर्दशानां विद्यास्थानानामधिष्ठात्री देवता स्वयमेव वा विद्या विग्रहिणी यथादर्शनं शिष्यानध्यापयन्तं कञ्चिद् ब्राह्मणमुपाध्यायमाजगाम। किमिति? अध्येषणार्थम्। त्वं गोपाय त्रायस्व। मा माम्। किमेवं स्यादित्युपचयं दर्शयति– रक्षिता सती शेवधिः सुखं निधानं ते तव अस्मि भवामि। कीदृशी रक्षा इति चेत्? दर्शयति–असूयकायेत्यादि। असूयकः परगुणप्रध्वंसनशीलः, उपाध्यायद्विट् हैतुको वा। तत एव निर्दग्धश्रद्धास्तिक्यभावनः सर्वमेवासूयन्न किञ्चित् प्रतिपद्यते। अनृजुः शठः, अन्यथावागन्यथाचारः। अयतः अप्रयतः, अशुचिः भिन्नवृत्तो वा अयतेन्द्रियः। एवं विधाय मा ब्रूयाः, मा वोच इत्यर्थः। वीर्यवती फलस्य साधिका तथा तव स्यां भवेयम्।

परतः श्रोतुरुपदेशः–

**य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन्।**
**तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह ॥**

य आतृणत्ति विध्यति। अवितथेन सत्येन ब्रह्मणः कर्णौ। अदुःखम्। असमर्थसमासेऽयम्। सूचीवर्तिप्रवेशनादिनिमित्तं दुःखमकुर्वन्। अमृतं संप्रयच्छन् अमृतत्वहेतुभूतमधिदेवतादिविषयं ज्ञानं सम्यक् प्रयच्छन्। तं मन्येत जानीयात् पितरं मातरञ्च, नेतरौ। तौ हि अत्यर्थं प्रवर्तते। पुत्रस्तु वाजिनवदनुनिष्पादी। अयं तु स्वार्थमनपेक्ष्य तदनुजिघृक्षयैव प्रवर्तते। पुत्रस्तु वाजिनवदनुनिष्पादी। अयं तु स्वार्थमनपेक्ष्य तदनुजिघृक्षयैव प्रवर्तते। तस्यापि वाजिनस्थानीयं यशो लोकभक्त्याद्यशक्यपरिहारमस्ति, तदस्य चाविवक्षितं प्रयोजनम्। तं प्रत्येतदुच्यते। अतश्च तस्मै न द्रुह्येत् कतमच्चनाह। अहशब्दो

विनिग्रहार्थीयः नशब्दाच्च परो द्रष्टव्यः। चनशब्दः अप्यर्थे। न च कतमत् किञ्चिदल्पमति कदाचिदपीति वा।

गुर्वनुवृत्तिमकुर्वतः परिनिन्दावचनम्—

**अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।**
**यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥**

अध्यापिता ग्राहिताः सन्तो विद्यां ये गुरुं नाद्रियन्ते। यतश्चाध्यापिता अतः विप्राः। वाङ्मनः कर्मभिः। यथैवेत्यादि। भोजनीया इति बहुलवचनात्कर्तरि कृत्यः। यथा ते न गुरोर्भोजकाः, तथैव तान् न भुनक्ति न पालयति। दृष्टे चादृष्टे च तत्कृतफलाभावान्ननुगृह्णाति श्रुतं तत्।

संप्रति यस्मै वक्तव्या, तं दर्शयति—

**यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्।**
**यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्**
**॥इति॥**

यमेव विद्याः जानीयाः। द्विप्रकारेणापि शौचेन शुचिं अप्रमत्तं प्रमादवर्जितं शास्त्रार्थनिष्ठमित्यर्थः। मेधाविनम् मेधया तद्वन्तम्। ब्रह्मचर्योपपन्नम् कृतोपनयनादि-संस्कारम्। यस्ते तव न द्रुह्येत् नापकरोति। कतमच्चन कदाचिदपि। अहशब्दः पूर्ववद्विनिग्रहार्थीयः। नशब्दाच्च परः, नैव दुह्येदित्यर्थः। तस्मै मा मां ब्रूयाः। निधिपाय निधिर्विद्यानां सुखहेतूनां निधानमुपाध्यायस्तं पाति यश्छात्रस्तस्मै। हे ब्रह्मन् ब्राह्मण। निधिरधिकरणसाधनः, निहिताऽस्मिन् विद्येति। अर्थसामर्थ्याद्वा कर्तृसाधनः, पात्रेषु निदधातीति।

## वाचः परमो रसः

### ii. भर्तृहरिः वाक्यपदीयम् कारिका, वृत्तिश्च' (I.12)
### ( व्याख्याकारः वृषभदेवः )

**प्राप्तरूपविभागाया यो वाचः परमो रसः।**
**यत्तत् पुण्यतमं ज्योतिस्तस्य मार्गोयमा सः ॥12॥**

अभिन्नात् संहतक्रमादन्तःसंनिवेशिनः शब्दतत्त्वाद्वर्णपदवाक्यलक्षणं रूपविभागं स्थानादिभेदेन प्राप्ताया वाचः। अभिधेयत्वेन वा गवादिरूपविभागोपग्रहं नित्येनार्थसंबधेन प्राप्ताया वाचः। वाच एव वा विभागा गवादित्वेनावतिष्ठन्ते। गवादयश्च बाह्यार्थरूपा इव विभागाः पुनः श्रुतिरूपेण परिणमन्ते। तथा एके कार्यकारणभावमेव शब्दार्थयोः संबन्धं मन्यन्ते। एवं ह्याह—

---

**प्राप्तरूपविभागायाः** इति। प्राप्तो रूपविभागो यथेति प्राप्तरूपविभागा गवादिशब्दाकारेण घटाद्याकारेण वा। **वाचः, परमः** इति। उत्कृष्टः। **पुण्यतमम्** इति। मोक्षाख्यफलनिष्पादकत्वात्। **ज्योतिः**, प्रकाशः····· स्वभावत्वात्। **मार्गः** इति। उपायः। **आञ्जसः** इति। ऋजुः, लाघवाद् यतोस्याविभागप्राप्तिः।

तामविभागावस्थामाह **अभिन्नात्** इति। गकाराकारादिवर्णभेदाभावात्। भेदाभावाच्च तन्निबन्धनः क्रमो नास्तीत्याह **संहतक्रमात्। अन्तः संनिवेशिनः** इति। न बुद्धिस्थानकरणसंनिवेशिनः, भिन्नत्वात्तस्य। **शब्दतत्त्वाद्** इति। शब्दपदात्। **वर्णपदवाक्यलक्षणम्** इति। विभागभेदाख्यानम्। **स्थानादिभेदेन** इति। स्थानकरणानुप्रदानभेदेन भेदं प्रतिपद्यते इत्येषा व्याख्या। अथवा प्राप्ताः स्वीकृताः गवादिरूपविभागाः ययेति। तत् कथययि **गवादिरूपविभागोपग्रहम्** इति। गवादय एव रूपप्रविभागाः परस्परतो विभज्यमानत्वात् तेषामुपग्रहः स्वीकारः। कथमित्याह **अभिधेयत्वेन** इति। ते हि विभक्ताः अभिधेयतया स्वीकृताः। सा पुनः कथमित्याह **नित्येन** इति। नित्यः शब्दार्थयोः संबन्ध इति वक्ष्यति। तृतीयां व्याख्यामाह **वाच एव** इति। परस्परव्यावृता गवादयः पदार्थरूपविभगाः, ते च तया प्राप्ताः। यत् तथैषार्थरूपेण विवर्तते। यदाह **गवादित्वेनावतिष्ठन्ते** इति। **गवादयश्च** इति। गवादिपदार्थाः बाह्यार्थरूपा इति न ते शब्दाः परमार्थतो बहिः सन्ति। बहिस्तु प्रत्यवभासमाना एवमभिहिताः। **श्रुतिरूपेण** इति। शब्दरूपेण। एतदाह सैव वागु गवादिपदार्थरूपेण परिणमते। ते च गवादयस्तत्रैव प्रलीना वाग्रूपेण व्यवतिष्ठन्त इति कार्यकारणभावः। शब्दः कारणं गवादयः कार्यम्। गवादयः कारणं शब्दः कार्यमिति। तदेवमुभयोर्गम्यगमकभावः।

**नामैवेदं रूपत्वेन ववृते रूपं चेदं नामभावेवतस्थे।**
**एके तदेकमविभक्तं विभेजुः प्रागिवान्ये भेदरूपं वदन्ति ॥क॥**

परमो रसः इति। वाचकत्वादभ्युदयहेतुत्वाच्च व्यवस्थित साधुभावः शब्दसमूहोभिधीयते। एवे ह्यह

**ऋजीषमेतद्वाचो यः संस्कारहीनः शब्दः।**

इति। यत्तत् पुण्यतमं ज्योतिः। त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा।

**"योऽयं जातवेदा यक्ष पुरुषेष्वान्तरः प्रकाशो यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः तत्रैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च।"**

इति तस्य मार्गोऽयमाञ्जसः। सामान्यविशेषवद्धि लक्षणं लक्षणप्रपञ्चाभ्यां शब्दब्रह्मणः कृत्स्नस्य लघुनोपायेन समधिगमननिमित्तम्। उपदेशं चान्तरेण

---

एतमर्थमागमेन दर्शयति —**नामैवेदम्** इति। नामेति शब्दः। **रूपत्वेन** इति। गवादिपदार्थत्वेन। **ववृते** इति। वृतेर्लिटि। विवृत्तमित्यर्थः। **अविभक्तम्** इति। प्रागपि वृत्तेस्तदवस्थितमेव, केवलमविभक्तं भवतीति। **रूपं चेदम्** इति। गवादिपदार्थाः **नामभावः**। इति। शब्दरूपेण प्रतिलब्धा गवादयः शब्दरूपेणावतिष्ठन्त इति एके मन्यन्ते। **प्रागिवान्ये** इति। केचित्तु शब्दार्थयोरविवृत्तिकालेऽपि विवेकेनावस्थानं मन्यन्ते। द्वयोरपि रूपसंहृतक्रमयोः क्रमवद्रूपेण विवृत्तिरिति। विभक्तमिति चैतत् परस्मात् तत्त्वतो न भिद्यत इत्येवैतदेव। **परमः** इति। प्रधानम्। रसः सारः। योयं साधुः शब्दः स प्रधानं रसः। तदुभयमाह-**वाचकत्वाद्** इति। अर्थप्रत्यायनेन प्राधान्यमाह। **अभ्युदयहेतुत्वाद्** इति।। धर्माभिव्यक्तेः। अनेन सारत्वमाह। **व्यवस्थितसाधुभावः** इति। साधुत्वान्नित्यमेव **व्यवस्थितमित्याह**। यदपेक्षया साधुत्वं तदाह **ऋजीषम्** इति। निष्पीडितरसस्याग्रे रसः सारः। यदन्यत् किट्टं स ऋजीषः। ये वाचोपभ्रंशाः किट्टस्थानीयाः ऋजीषाः, साधवस्तु सार इति। **पुण्यतमम्** इति। अन्येभ्यः पुण्येभ्योतिशयमाख्यातुं प्रकाशान्तराणि **त्रयः प्रकाशाः** इत्यादिना। **जातवेदाः अग्निः** तमोपनयनादात्मानं परं च प्रकाशयति। **आन्तरो** बुद्धिः। सा बाह्यान् घटादीन् प्रकाशयति, आत्मानं च, स्वयं विदितत्वात्। **प्रकाशाप्रकाशयोः** इति। प्रकाशानामेषां त्रयाणाम्, अप्रकाशानां च घटादीनाम्। यतोस्य प्रकर्षः। **उपनिबद्धम्**। शब्देन द्योतनात्। स्थास्नु पृथिव्यादि, **चरिष्णु** मनुष्यादि। **तस्य मार्गोऽयम्** इति। मार्गः उपायः। **आञ्जसो** लाघवादित्युक्तः। तल्लाघवमाह **सामान्यविशेषवद्धि** इति। **समधिगमानिमित्तम्** इति संबन्धः।

संस्कारवति निरपभ्रंशे शब्दब्रह्माणि लब्धप्रतिष्ठानां शिष्टानामनुमानम्। शिष्टज्ञानाच्च पृषोदरप्रकाराणां शिष्टप्रयोगत्वात् साधुत्वप्रतिपदाने निमित्तं व्याकरणम्। तथा चोक्तम्।

**''शब्दार्थसंबन्धनिमित्ततत्त्वं वाच्याविशेषेपि च साध्वसाधून्।**
**साधुप्रयोगानुमितांश्च शिष्टान्न वेद यो व्याकरणं न वेद''**
**॥ख॥ 12**

---

प्रतिपदपाठोऽतिगुरुः। सामान्यं विशेषश्च यत्र विद्येते तदेवमुच्यते। उत्सर्गापवादविधिप्रतिषेधनिपातनातिदेशस्थान्यादेशलिङ्गनियमैः सप्तभिः सामान्य-विशेषप्रकारैः। **लक्षणप्रपञ्चाभ्याम्** इति। ध्रुवमपाये इति लक्षणम्, उत्तरः प्रपञ्चः। **कृत्स्नस्य ब्रह्मणः** इति। शब्दराशेः एवं तदन्वाख्यातानां व्याकरणमुपायः। अनन्वाख्यातानामपीति दर्शयति उपदेशं **चान्तरेण** इति। न चाष्टाध्यायीमधीते संस्कृतांश्च शब्दान् प्रयुङ्.क्ते शिष्ट इत्यनुमीयते। अनुमानं चेदमष्टाध्यायीत एवेति। किं तैरनुमितैरित्याह **शिष्टज्ञानाच्च** इति। तैर्य उपदिष्टाः लक्षणेन नान्वाख्याताः पृषोदरप्रकाराः ते तत्प्रयुक्तत्वात् साधव इति ज्ञायन्ते। एवं पारम्पर्यात् तेषां व्याकरणं साधुत्वप्रतिपत्तौ लघुरुपायः। शब्दार्थसंबन्धाः निमित्तं चेति द्वन्द्वः। निमित्तं शब्दप्रवृत्तिनिमित्तम्। एषां तत्त्वमविपरीतं रूपम्। **वाच्याविशेषेऽपि** इति। एकस्मिन्नेवार्थे एक एव शब्दः साध्वसाधुतां प्रतिपद्यते। यथा सास्नादिमति गोणीशब्दो जात्यादिनिमित्तेनासाधुः, आवपनादिनिमित्तसाधर्म्यात् साधुः। **साधुप्रयोगानुमितान्** इति। यथोक्तप्रकारेण। **न वेद** इति। यो व्याकरणं न जानाति स एतत् सर्व न जानतीति॥12॥

## 5. भरतः – नाट्यशास्त्रम्

### i. रसभावादयः (vi. 15-45)

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृता ॥15॥

एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना।
पुनश्च भावान् वक्ष्यामि स्थायिसञ्चारिसत्त्वजान् ॥16॥

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥ 17॥

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥18॥

व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥19॥

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।
मतिर्व्याधिरथोन्मादस्तथा मरणमेव च ॥20॥

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥21॥

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरसादोऽथ वेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विकाः स्मृताः ॥22॥

आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा।
चत्वारोऽभिनया ह्येते विज्ञेया नाट्यसंश्रयाः ॥23॥

लोकधर्मी नाट्यधर्मी धर्मी तु द्विविधः स्मृतः।
भारती सात्त्वती चैव कैशिक्यारभटी तथा ॥24॥

चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम्।
आवन्ती दाक्षिणात्या च तथा चैवोड्रमागधी ॥25॥

पाञ्चाली मध्यमा चैव ज्ञेया नाट्यप्रवृत्तयः।
दैविकी मानुषी चैव सिद्धिः स्याद्विविधैव च ॥26॥

शारीरा वैणवाश्चैव सप्त षड्जादयः स्वराः।
ततं चैवावनद्धं च धनं सुषिरमेव च ॥27॥

चतुर्विधं च विज्ञेयमातोद्यं लक्षणान्वितम्।
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ॥28॥

घनस्तु तालो विज्ञेयः सुषिरो वंश एव च।
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् ॥29॥

ग्रानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम्।
चतुरस्रो विकृष्टश्च रङ्गस्त्र्यस्रश्च कीर्तितः ॥30॥

एवमेषेऽल्पसूत्रार्थो व्यादिष्टो नाट्यसङ्ग्रहः।
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ॥31॥

तत्र रसानेव तावदादावभिधास्यामः। न हि रसादृते कश्चिदप्यर्थः प्रवर्तते। तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः। को वा दृष्टान्त इति चेत्– उच्यते यथा नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः तथा नानाभावोपगमाद्रसनिष्पत्तिः। यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधीभिश्च षड् रसा निर्वर्त्यन्ते, एवं नानाभावोपहिता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति। अत्राह––रस इति कः पदार्थः? उच्यते आस्वाद्यत्वात्। कथमास्वाद्यते रसः? अत्रोच्यते– यथाहि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाप्यधिगच्छन्ति, तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षका हर्षादींश्चाधिगच्छन्ति। 'तस्मान् नाट्यरसाः' इति व्याख्याताः। अत्रानुवंश्यौ श्लोकौ भवतः–

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥32॥

भावाभिनयसंयुक्ताः स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥33॥

अत्राह–किं रसेभ्यो भावानामभिनिर्वृत्तिरुताहो भावेभ्यो रसानामिति? अत्र केषाञ्चिन्मतं परस्परसम्बन्धादेषामभिनिर्वृत्तिरिति। तन्न। कस्मात् ? दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिरिति, न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति। भवन्ति चात्र श्लोकाः–

नानाभिनयसम्बन्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥34॥

नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा।
एवं भावा भावयन्ति रसानभिनयैः सह ॥35॥

न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥36॥

व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत्।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥37॥

यथा बीजाद् भवेद् वृक्षो वृक्षात् पुष्पं फलं यथा।
तथा मूलं रसाः सर्वे ततो भावा व्यवस्थिताः ॥38॥

तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः। तेषामुत्पत्तिहेतवश्चत्वारो रसाः। तद्यथा शृङ्गारो रौद्रो वीरो बीभत्स इति।

अत्र–

शृङ्गाराद्धि भवेद्धास्यो रौद्रात्तु करुणो रसः।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥39॥

शृङ्गारानुकृतिर्या तु स हास्य इति संज्ञितः।
रौद्रस्यापि च यत् कर्म स ज्ञेयो करुणो रसः ॥40॥

वीरस्यापि च यत् कर्म सोऽद्रभुतः परिकीर्तितः।
बीभत्सदर्शनं यच्च भवेत् डस तु भयानक : ॥41॥

अथ वर्णाः–

श्यामो भवेत्तु शृङ्गारः सितो हास्यः प्रकीर्तितः।
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ॥42॥

गौरो वीरस्तु विज्ञेयः कृष्णश्चापि भयानकः।
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥43॥

अथ दैवतानि–

शृङ्गारो विष्णुदैवतो हास्यः प्रमथदैवतः।
रौद्रो रुद्राधिदेवश्च करुणो यमदैवतः ॥44॥

बीभत्सस्य महाकालः कालदेवो भयानकः।
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥45॥

**ii. भावव्यञ्जकाः (vii. 114-125)**

रोमाञ्चेः प्रतिबोधश्च क्रोधासूये धृतिस्तथा।
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति हि ॥114॥

स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा।
त्रासश्च मरणं चैव वैवर्ण्यं च भयानके ॥115॥

अपस्मारस्तथोन्मादो विपादो मद एव च।
मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रिताः ॥116॥

स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा।
आवेगो जडता हर्षो मूर्छा चैवाद्भुताश्रयाः ॥117॥

ये त्वेते सात्त्विका भावा नानाभिनयसंश्रिताः।
रसेष्वेतेपु सर्वेपु विज्ञेया नाट्ययोक्तृभिः ॥118॥

न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ॥119॥

सर्वेषां समवेतानां रूपं यस्य भवे बहु।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥120॥

विभावानुभावयुतो ह्यङ्गवस्तुसमाश्रयः।
संचारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत् ॥121॥

स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः।
सञ्चार्याकारमात्रेण स्थायी यस्माद् व्यवस्थितः ॥122॥

चित्राणि न विरज्यन्ते लोके चित्रं हि दुर्लभम्।
विमर्दो रागमायाति प्रयुक्तोहि प्रयत्नतः ॥123॥

नानार्थभावनिष्पन्ना स्थायिसत्त्वविचारिणः।
पुंसानुकीर्णाः कर्तव्याः काव्येषु हि रसाश्रयाः ॥124॥

एवं रसाश्च भावाश्च व्यवस्था नाटके स्मृताः।
य एवमेतान् जानाति स गच्छेत् सिद्धिमुत्तमाम् ॥125॥

**इति भारतीये नाट्यशास्त्रे भावव्यञ्जको नाम सप्तमोऽध्यायः।**

## iii. षट्त्रिंशत् लक्षणानि (xvii- 1-42 )

भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा।
हेतुसंशयदृष्टान्ताः प्राप्त्यभिप्राय एव च ॥1॥

निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम्।
गुणातिपातादिशयौ तुल्यतर्कः पदोच्चयः ॥2॥

दिष्टं चैवोपदिष्टं च विचारस्तद्विपर्ययः।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥3॥

अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च।
मनोरथश्च लेशश्च संक्षोभो गुणकीर्तनम् ॥4॥

ज्ञेया ह्यनुक्तसिद्धिश्च प्रियं वचनमेव च।
षट्त्रिंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत् ॥5॥

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम्।
भूषणैरिव विन्यस्तैस्तद् भूषणमिति स्मृतम् ॥6॥

यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥7॥

सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते।
यत्र श्लिष्टविशिष्टर्थं सा शोभेभिधीयते ॥8॥

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥9॥

यत् प्रयोजनसामर्थ्याद् वाक्यमिष्टार्थसाधकम्।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः ॥10॥

अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते।
अनेकत्वाद्विचाराणां स संशय इति स्मृतः ॥11॥

सर्वलोकमनोग्राहि यस्तु पक्षार्थसाधकः।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः ॥12॥

दृष्ट्वैवावयवान् कांश्चिद् भावो यत्रानुमीयते॥
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥13॥

अभूतपूर्वो योऽप्यर्थः सादृश्यात्परिकल्पितः।,
लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः ॥14॥

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम्।
परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥15॥

निरवद्यस्य वाक्यस्य पूर्वोक्तस्य प्रसिद्धये।
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥16॥

बहूनां च प्रयुक्तानां नाम यत्राभिकीर्त्यते।
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥17॥

सिद्धान् बहून् प्रधानार्थान् उक्त्वा यत्र प्रयुज्यते।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥18॥

गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः।
गुणातिपातो मधुरोऽनिष्ठुरार्थो भवेदथ ॥19॥

बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान्।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥20॥

रूपकैरुपमानैर्वा तुल्यार्थाभिः प्रयोजितः।
अप्रत्ययार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥21॥



बहूनां च प्रयुक्तानां पदानां बहुभिः पदैः।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥22॥

यथादेशं यथाकालं यथारूपं च वर्ण्यते।
अप्रत्यक्षं परोक्षं वा दिष्टं तद्वर्णतोऽपि वा ॥23॥

परिगृह्य च शास्त्रार्थं यद्वाक्यमभिधीयते।
विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥24॥

पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः।
अनेकापोहसंयुक्तो विचारः परिकीर्तितः ॥25॥

विचारस्यान्यथाभावस्तथा दृष्टोपयोगतः।
सन्देहात्कल्प्यते यस्तु स विज्ञेयो विपर्ययः ॥26॥

वाच्यमर्थं परित्यज्य दृप्तादिभिरनेकधा।
अन्यस्मिन्नेव पतनादिह भ्रंशः स इष्यते ॥27॥

उभयोः प्रीतिजननोर्विरुद्धाभिनिविष्टयोः।
अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥28॥

ईप्सितार्थप्रसिध्यर्थं कीर्त्यन्ते यत्र सूरिभिः।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥29॥

हृष्टैः प्रसन्नवदनैर्यत्परस्यानुवर्तनम्।
क्रियते वाक्यचेष्टाभिस्तद्दाक्षिण्यमिति स्मृतम् ॥30॥

यत्र संकीर्तयन् दोषं गुणमर्थेन दर्शयेत्।
गुणातिपाताद् दोषाद्वा गर्हणं नाम तद्भवेत् ॥31॥

अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते।
वाक्यं माधुर्यसंयुक्तं सार्थापत्तिरुदाहृता ॥32॥

वाक्यैः सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥33॥

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम्।
पृच्छति चाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥34॥

दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम्।
सादृश्यं क्षोभजननं सारूप्यमिति संज्ञितम् ॥35॥

हृदयस्थस्य वाक्यस्य गूढार्थस्य विभावकम्।
अन्यापदेशैः कथनं मनोरथ इति स्मृतः ॥36॥

यद्वाक्यं वादकुशलैरुपायेनाभिधीयते।
सदृशार्थाभिनिष्पन्नं स लेश इति कीर्तितः ॥37॥

परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते।
अदुष्टोऽन्योऽपि वा कश्चित् स संक्षोभ इति स्मृतः ॥38॥

लोके गुणातिरिक्तानां गुणानां यत्र नामभिः।
एकोऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥39॥

प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते।
वचनेन विना जातु सिद्धिः सा परिकीर्तिता ॥40॥

यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥41॥

एतानि च काव्यस्य लक्षणानि षट्विंशदुद्देश्यनिदर्शनानि।
प्रबन्धशोभाकराणि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसानि॥42॥

विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च।
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादोऽतिशयश्च हेतुः ॥42क॥

सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथश्च।
आख्यानयाञ्चा प्रतिषेधपृच्छादृष्टान्तनिर्भासनसंशयाश्च ॥42ख॥

आशीः प्रियोक्तिः कपटं क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव।
अर्थानुवृत्तिर्ह्युपपत्तियुक्ती कार्यानुनीती परिदेवनं च ॥42ग॥

षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै भूषणसम्मितानि।
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथा-
रसं तु ॥42घ॥

### iv. अलङ्काराः, गुणाः, दोषाश्च (xvii- 43-121)

उपमा दीपकं चैव रूपकं यमकं तथा।
काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः ॥43॥

यत्किञ्चित् काव्यबन्धेषु सादृश्येनोपमीयते।
उपमा नाम विज्ञेया गुणाकृतिसमाश्रया ॥44॥

एकस्यैकेन सा कार्यानेकेनाप्यथवा पुनः।
अनेकस्य तथैकेन बहूनां बहुभिस्तथा ॥45॥

तुल्यं ते शशिना वक्त्रमिति ह्येककृता भवेत्।
शशाङ्कवत् प्रकाशन्ते ज्योतिंषीति भवेत्तु या ॥46॥

अनेकस्यैकविषया सोपमा परिकीर्तिता।
श्येनबर्हिणभासानां तुल्याक्ष इति या भवेत् ॥47॥

एकस्य बहुभिः सा स्यादुपमा नाटकाश्रया।
बहूनां बहुभिर्ज्ञेया घना इव गजा इति ॥48॥

प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा।
किञ्चिच्च सदृशी ज्ञेया ह्युपमा पञ्चधा बुधैः ॥49॥

प्रशंसा यथा—दृष्ट्वा तु तां विशालाक्षीं तुतोष मनुजाधिपः।
मुनिभिः साधितां कृच्छ्रात् सिद्धिं मूर्तिमतीमिव ॥50॥

निन्दा यथा—सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम्।
वने कण्टकिनं वल्ली दावदग्धमिव द्रुमम् ॥51॥

कल्पिता यथा—क्षरन्तो दानसलिलं लीलामन्थरगामिनः।
मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः ॥52॥

सदृशी यथा—यत्त्वायाऽद्य कृतं कर्म परचित्तानुरोधिना।
सदृशं तत्तवैव स्यादतिमानुषकर्मणः ॥53॥

किञ्चित्सदृशी—संपूर्णचन्द्रवदना नीलोत्पलदलेक्षणा।
मत्तमातङ्गगमना संप्राप्तेयं सखी मम ॥54॥

उपमाया बुधैरेते भेदा ज्ञेयाः समासतः।
शेषा ये लक्षणैर्नोक्ताः संसाध्यास्तेऽपि-लोकतः ॥55॥

स्वविकल्पेन रचितं तुल्यावयवलक्षणम्।
किञ्चत्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत् ॥56॥

यथा— पद्माननास्ताः कुमुदप्रहासा विकासिनीलोत्पलचारुनेत्रा।
वापीस्त्रियो हंसकुलैर्नदद्भिर्वि रेजुरन्योन्यमिवाह्वयन्त्यः ॥57॥

नानाधिकरणस्थानां शब्दानां संप्रदीपनः।
एकवाक्येन संयोगो यस्तद्दीपकमुच्यते ॥58॥

यथा-- सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि।
गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा
क्रियन्ते ॥59॥

शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम्।
विशेषदर्शनञ्चास्य गदतो मे निबोधत ॥60॥

पादान्तयमकं चैव काञ्चीयमकमेव च।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥61॥

यमकं चक्रवालं च सन्दष्टयमकं तथा।
पादादियमकञ्चैव आम्रेडितमथापि च ॥62॥

चतुर्व्यवसितञ्चैव मालायमकमेव च।
एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम् ॥63॥

चतुर्णां यत्र पादानामन्ते स्यात्सममक्षरम्।
तद्वै पादान्तयमकं विज्ञेयं नामतो यथा ॥64॥

दिनक्षयात् संहृतरश्मिमण्डलं दिवीव लग्नं तपनीयमण्डलम्।
विभाति ताम्रं दिवि सूर्यमण्डलं यथा तरुण्याः स्तनभारमण्डलम् ॥65॥

पादस्यान्ते यथा चादौ स्यातां यत्र समे पदे।
तत्काञ्चीयमकं चेव विज्ञेयं सूरिभिर्यथा ॥66॥

यामायामाश्चन्द्रवतीनां द्रवतीनां
व्यक्ताव्यक्ता सारजनीनां रजनीनाम्।
फुल्ले फुल्ले सभ्रमरे वाभ्रमरे वा
रामा रामा विस्मयते च स्मयते च ॥67॥

अर्थेनैकेन यद्वृत्तं सर्वमेव समाप्यते।
समुद्गयमकं नाम तज्ज्ञेयं पण्डितैर्यथा ॥68॥

केतकीमुकुलपाण्डरदन्तः शोभते प्रवरकाननहस्ती।
केतकीमुकुलपाण्डरदन्तः शोभते प्रवरकाननहस्ती ॥69॥

एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ यदि।
विक्रान्तयमकं नाम तद्विज्ञेयमिदं यथा ॥70॥

स पूर्वं वारणो भूत्वा द्विशृङ्ग इव पर्वतः ।
अभवद्दन्तवैकल्याद् विशृङ्ग इव पर्वतः ॥71॥

पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः।
चक्रवच्चक्रवालं तु विज्ञेयं नामतो यथा ॥72॥

शरैर्यथा शत्रुभिराहता हता
हताश्च बाणैरनुपुंखगैः खगैः।
खगैश्च सर्वैर्युधि सञ्चिताश्चिता-
श्चिताधिरूढा हि हतास्तलैस्तलैः ॥73॥

आदौ द्वौ यत्र पादे तु भवेतामक्षरे समे।
सन्दष्टयमकं नाम विज्ञेयं तद् बुधैर्यथा ॥74॥

पश्य पश्य हि रमणस्य मे गुणान्
येन येन वशगां करोति माम्।
येन येन हि ममैति दर्शनं
तेन तेन वशगां करोति माम् ॥75॥

आदौ पादस्य यत्र स्यात् समावेशः समाक्षरः।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ॥76॥

विष्णुः सृजति भूतानि विष्णुः संहरति प्रजाः।
विष्णुः प्रसूते त्रैलोक्यं विष्णुर्लोकाधिदैवतम् ॥77॥

पादस्यान्तं पदं यच्च द्विर्द्विरेकमिहोच्यते।
पादन्त्वाम्रेडितं नाम विज्ञेयं निपुणैर्यथा ॥78॥

विजृम्भितं निःश्वसितं मुहुर्मुहुः
यथाभिधानं स्मरणं पदे पदे।
यथा च ते ध्यानमिदं पुनः पुनः
तथा गता तां रजनी विना विना ॥79॥

सर्वे पादाः समा यत्र भवन्ति नियताक्षराः।
चतुर्व्यवसितं नाम तद्विज्ञेयं बुधैर्यथा ॥80॥

वारणानामयमेव कालः
वारणानामयमेव कालः
वारणानामयमेव कालः
वा रणानामयमेव कालः ॥81॥

नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत्।
तन्मालायमकं नाम विज्ञेयं पण्डितैर्यथा ॥82॥

हली बली हली माली शूली खेली लली जली।
बलो बलोच्चलोलाक्षो मुसली त्वाभिरक्षतु ॥83॥

असौ हि रामारतिविग्रहप्रिया
रहःप्रगल्भा रमणं रहोगतम्।
रतेन रात्रिं ग मयेत् परेण वा
न चेदुदेष्यत्यरुणः पुरो रिपुः ॥84॥

स पुष्कराक्षः क्षतजोक्षिताक्षः
क्षरत् क्षतेव्यः क्षतजं दुरीक्षम्।
क्षतैर्गवाक्षैरिव संवृत्ताक्षः
साक्षात् सहस्राक्ष इवावभाति ॥85॥

एभिरर्थक्रियापेक्षैः कार्यं काव्यं तु लक्षणैः।
अत ऊर्ध्वं तु वक्ष्यामि काव्यदोषांस्तथाविधान् ॥86॥

गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम्।
न्यायादपेतं विषमं विसन्धि शब्दच्युतं वै दश काव्यदोषाः ॥87॥

पर्यायशब्दाभिहितं गूढार्थमभिसंज्ञितम्।
अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते ॥88॥

अर्थहीनं त्वसम्बद्धं सावशेषार्थमेव च।
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ॥89॥

विवक्षितोऽन्य एवार्थो यत्रन्यार्थेन भिद्यते।
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविचक्षणाः ॥90॥

एकार्थस्याभिधानं यत् तदेकार्थमिति स्मृतम्।
अभिप्लुतार्थं विज्ञेयं यत् पादेन समस्यते ॥91॥

न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम्।
वृत्तभेदो भवेद्यत्र विषमं नाम तद्भवेत् ॥92॥

अनुपश्लिष्टशब्दं यत् तद्विसन्धीति काशितम्।
शब्दच्युतं च विज्ञेयमपशब्दस्य योजनात् ॥93॥

एते दोषा हि काव्यस्य मया सम्यक् प्रकीर्तिताः।
गुणा विपर्ययादेषां माधुर्यौदार्यलक्षणाः ॥94॥

श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम्।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते ॥95॥

ईप्सितेनार्थजातेन सम्बद्धानां परस्परम्।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥96॥

अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते।
सुखशब्दार्थसम्बोधात् प्रसादः परिकीर्त्यते ॥97॥

अन्योन्यसदृशा यत्र तथा ह्यन्योन्यभूषणाः।
अलङ्कारगुणाश्चैव समासात् समता यथा ॥98॥

उपमाद्युपदिष्टानामर्थानां यत्नतस्तथा।
प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ॥99॥

बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥100॥

अवगीतोऽपि हीनोऽपि स्यादुदात्तावभावकः।
यत्र शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम् ॥101॥

सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥102॥

यस्यार्थोऽनुप्रवेशेन मनसः परिकल्प्यते।
अनन्तरं प्रयोगस्य साऽर्थव्यक्तिरुदाहृता ॥103॥

अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः।
उपेतमतिचित्रार्थैरुदात्तं तच्च कीर्त्यते ॥104॥

यो मनःश्रोत्रविषयः प्रसादजनको भवेत्।
शब्दबन्धो प्रयोगेण स कान्त इति भण्यते ॥105॥

एवमेते ह्यलङ्कारा गुणा दोषाश्च कीर्तिताः।
प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम् ॥106॥

लध्वक्षरप्रायकृतं उपमारूपकाश्रयम्।
काव्यं कार्यं तु काव्यज्ञैर्वीररौद्राद्भुताश्रयम् ॥107॥

गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा।
कदाचिद्रौद्रवीराभ्यां यदाधर्षणजं भवेत् ॥108॥

रूपदीपकसंयुक्तमार्यावृत्तसमाश्रयम्।
शृङ्गारे तु रसे कार्यं मृदुवृत्तं तथैव च ॥109॥

उत्तरोत्तरसंयुक्तं वीरे पाठ्यं तु यद्भवेत्।
जगत्यातिजगत्यां वा संकृत्यां वापि तद्भवेत् ॥110॥

तथैव युद्धसंस्फेटा उत्कृत्यां सप्रकीर्तितौ।
करुणे शक्वरी ज्ञेया तथैवातिधृतिर्भवेत् ॥111॥

यद्वीरे कीर्तितं छन्दस्तद्रौद्रेऽपि प्रयोजयेत्।
शेषाणामर्थयोगेन छन्दः कार्यं प्रयोक्तृभिः ॥112॥

त्रिविधं ह्यक्षरं कार्यं कविभिर्नाटकाश्रयम्।
ह्रस्वं दीर्घं प्लुतञ्चैव रसभावविभावकम् ॥113॥

एकमात्रं भवेद् ह्रस्वं द्विमात्रं दीर्घमिष्यते।
प्लुतं चैव त्रिमात्रं स्यादक्षरं स्वरयोजनात् ॥114॥

स्मृते चासूयिते चैव तथा च परिदेविते।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ॥115॥

आ-कारस्तु स्मृते कार्य ऊ-कारश्चाप्यसूयिते।
परिदेविते तु हा-कार ओं-कारोऽध्ययने तथा ॥116॥

ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम्।
काव्ययोगेषु सर्वेषु ह्यक्षराणि तु योजयेत् ॥117॥

ये बन्धा पूर्वमुद्दिष्टा विषमार्धसमाः समाः।
उदारशब्दैर्मधुरैः कार्यास्तेऽर्थवशानुगाः ॥118॥

शब्दानुदारमधुरान् प्रमदाभिधेयान्
नाट्याश्रयासु कृतिषु प्रयतेत कर्तुम्।
तैर्भूषिता बहु विभान्ति हिं काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥119॥

चेक्रीडितप्रभृतिभिर्विकृतैस्तु शब्दै-
र्युक्ता न भान्ति ललिता भरतप्रयोगाः।
कृष्णाजिनाक्षरुरुचर्मधरै-र्धृताक्तै-
र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥120॥

मृदुललितपदार्थं गूढशब्दार्थहीनं
जनपदसुखभोग्यं बुद्धिमन्नृत्तयोज्यम्।
बहुरसकृतमार्गं सन्धिसन्धानयुक्तं
भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥121॥

**इति भारतीये नाट्यशास्त्रे वागभिनयो नाम सप्तदशोऽध्यायः।**



# 6. अलङ्काराः, महाकाव्यलक्षणम् प्रहेलिकानिर्वचनं च

## व्यासः– विष्णुधर्मोत्तरपुराणम् (III- xiv—xvi)

मार्कण्डेय उवाच

एकैकस्य तु वर्णस्य विन्यासो यः पुनःपुनः।
अर्थगत्या तु संख्यातमनुप्रासं पुरातनैः ॥1॥

अत्यर्थं तत्कृतं राजन्ग्राम्यतामुपगच्छति।
शब्दाः समानानुपूर्व्या यमकं कीर्तितं पुनः ॥2॥

आदौ मध्ये तथैवान्ते पादस्य तु तदिष्यते॥
संदष्टकसमुद्राख्यौ तथैव यमकौ मतौ ॥3॥

समस्तपादयमकं दुष्करं परिकीर्तितम्।
उपमानेन तुल्यत्त्वमुपमेयस्य रूपकम् ॥4॥

रूपकाभ्यधिकं नाम तदेवैकगुणाधिकम्।
गुणानां व्यतिरेकेण व्यतिरेकमुदाहृतम् ॥5॥

उपमानविरुद्धैश्च गुणैस्तदपरं मतम्।
द्वित्र्यर्थं वाचकैः शब्दैः श्लेष इत्यभिधीयते ॥6॥

अन्यरूपस्य चार्थस्य कल्पनां यान्थया भवेत्।
उत्प्रेक्षाख्यो ह्यलङ्कारः कथितः स पुरातनैः ॥7॥

उपन्यासस्तथान्यः स्यात्प्रस्तुताद्यः क्वचिद्भवेत्।
ज्ञेयः सोर्थान्तरन्यासः पूर्वार्थानुगतो यदि ॥8॥

उपन्यासेन वान्यस्य यदन्यः परिकीर्त्यते।
उपन्यासमलङ्कारं तं नरेन्द्र प्रचक्षते ॥9॥

हेतुं विना विततत्तां प्राप्ता सा तु विभावना।
प्रोक्ता चातिशयोक्तिस्तु ह्यतुलैरुपमागुणैः ॥10॥

यथा स्वरूपकथनं स्वभावोक्तिः प्रकीर्तिता।
भूयसामुपदिष्टानां निर्देशः क्रमशस्तथा ॥11॥

यथासंख्यमिति प्रोक्तमलङ्कारः पुरातनैः।
विशेषप्रापणादुक्ता विशेषोक्तिस्तथानृप ॥12॥

या क्रिया चान्यफलदा विरोधस्तु स इष्यते।
स्तुतिरूपेण या निन्दा निन्दास्तुतिरिहोच्यते॥ 13॥

निन्दास्तुतिस्तथैवोक्ता निन्दारूपेण या स्तुतिः।
वस्तुना रूप्यमाणेन दर्शनं तन्निदर्शनम् ॥14॥

विना तथा स्यादुपमा तु यत्र तेनैव तस्यैव भवेन्नृवीर।
अनन्वयाख्यं कथितं पुराणैरेतावदुक्तं तव लेशमात्रम्॥15॥

**इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे**
**मार्कण्डेयवज्रसंवादे अलङ्काराध्यायो नाम चतुर्दशोऽध्यायः ॥14॥**

**मार्कण्डेय उवाच**

धर्मार्थकाममोक्षाणां शास्त्रं स्यादुपदेशकम्।
पूर्वैराचरितं सद्भिर्धर्मकामार्थसाधकम् ॥1॥

मोक्षस्य यत्रोपन्यास इतिहासः स उच्यते।
तदेव काव्यमित्युक्तं चोपदेशं विना कृतम् ॥2॥

एकस्य चरितादेव तथा काव्यं प्रकीर्तितम्।
निबद्धो यत्र राजेन्द्र नायकप्रतिनायकौ ॥3॥

प्रयाणोद्यतसंप्रेषयुद्धयुक्तं तदेव तु।
नायकाभ्युदयोपेतं महाकाव्यं तदिष्यते ॥4॥

वर्णयेच्च महाकाव्ये देशपत्तनपार्थिवान्।
ऋत्वद्रिनिम्नगाश्चैव तथा नारीश्च पार्थिव ॥5॥

वर्णनीया तथैवात्र नायकप्रतिनायकौ।
नायको धर्मविजयी सताम्पन्थानमाश्रितः ॥6॥

तथा च लोकविजयी विज्ञेयः प्रतिनायकः।
प्रतिनायकघातस्तु वक्तव्यो नेतरस्य तु ॥7॥

नायकस्य महाराज मरणं नैव वर्णयेत्।
सशरीरस्य यस्य स्यात्संप्राप्तिस्तस्य वर्णयेत् ॥8॥

छन्दोविरहितं गद्यं शब्दशास्त्रविरोधि च।
कष्टाक्षरपदन्यासमश्लीलवचनान्वितम् ॥9॥

तस्मादुल्लक्ष्यवाक्यार्थमप्रसिद्धाभिधानवत्।
काव्यबन्धं न कर्तव्यं पुनरुक्तं च यद्भवेत् ॥10॥

विस्मये वाभ्यसूयायां भयशोकत्वमासु च।
हर्षे च वीप्सा कर्तव्या पुनरुक्तं न तद्विदुः ॥11॥

दूतवाक्ये तथा स्वप्ने कार्यगत्या तथागते।
पुनर्वचननिर्देशे पुनरुक्तं च तद्विदुः ॥12॥

ससंशयं न वक्तव्यं प्रतिज्ञारहितं तथा ।
पूर्वापरविरुद्धं च यच्च लोकविगर्हितम् ॥13॥

शृङ्गारहास्यकरुणारौद्रवीरभयानकैः ।
बीभत्साद्भुतशान्ताख्यै रसैः कार्यं समन्वितम् ॥14॥

**इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे**
**मार्कण्डेयवज्रसंवादे महाकाव्यलक्षणं नाम पञ्चदशोऽध्यायः ॥15॥**

**मार्कण्डेय उवाच**

काव्ये येऽभिहिता दोषाः कैश्चित्तेभ्यः प्रहेलिकाः।
कर्तव्याश्च तथैवान्यास्तासां वक्ष्यामि लक्षणम् ॥1॥

श्लोकेनैकेन वा द्वाभ्यां कर्तव्या तु नरोत्तम।
न कर्तव्याश्च ता राजन्बहुश्लोकनिबन्धनाः ॥2॥

तस्यां मात्रवशादर्थो गोप्यते सा समागता।
पर्यायवचनाद्यस्यां वन्दिता सा प्रकीर्तिता ॥3॥

वृत्तान्तगोपिकान्ताया पदैर्व्यहितैर्भवेत्।
अप्रसिद्धैस्तु पर्यायैर्दुःखिता नाम सा स्मृता ॥4॥

कल्पनागोपितार्थात्तु कथिता परिहासिका ।
समानरूपतुल्यार्थो शब्दैरन्यैः प्रकीर्तिता ॥5॥

दुर्बोधाक्षरबन्धा च परुषा नामतः स्मृता।
संख्यामात्रसमानत्वात्संख्याताख्या तथोच्यते॥6॥

अर्थान्तरान्कल्पनया कल्पिता च तथोच्यते।
अन्यस्य संज्ञाव्यामोहान्नमान्तरितसंज्ञिता ॥7॥

अर्थव्यामोहतः प्रोक्ता निभृता च महानृप।
समानशब्दा कथिता तुल्यशब्दनिबन्धना ॥8॥

अर्थानुलोमदुर्बोधा व्यामूढेति तथोच्यते।
गुच्छाख्या कथिता वृत्तें नानाबन्धनिबन्धना ॥9॥

एकोभयबहुच्छन्ने यथार्थपरिगोपिते।
संकीर्णा सम्भवोपेता या तदर्थकरी भवेत् ॥10॥

तदर्थकारी यत्रार्थो ज्ञायतेऽन्यार्थकामुकः।
राजञ्शब्दवशात्सा च कथिता व्यभिचारिणी ॥11॥

उक्तेर्थे वृत्तबन्धेन मात्राभिः स्थापिता तथा।
नष्टार्था वा च सा प्रोक्ता वृत्तबन्धनिदर्शिता ॥12॥

नष्टाक्षरा तु कथिता विनैकेन तदार्थदा।
अन्यार्थता तथैवोक्ता वर्णभ्रष्टा नरेश्वर ॥13॥

कालस्य रूपरूपाणां व्याख्यानेन तदार्थदा।
बीजमात्रेण लेशाख्या भूमिपाल प्रकीर्तिता ॥14॥

अश्लीलमेतास्वपि नैव कार्यं तद्वर्ज्यमाहुः कवयो नरेन्द्र।
उद्वेजनीयं तु सतां तदुक्तमश्लीलबन्धं सुखदं न काव्यम् ॥15॥

**इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे**
**मार्कण्डेयबज्रसंवादे प्रहेलिकालक्षणो नाम षोडशोऽध्यायः॥16॥**

## 7. काव्यसामान्यलक्षणप्रभेदादि

### भामहः– काव्यालङ्कारः (I- 1-59)

प्रणम्य सार्वं सर्वज्ञं मनोवाक्कायकर्मभिः।
काव्यालङ्कार इत्येष यथाबुद्धि विधास्यते ॥1॥

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
प्रीतिं करोति कीर्त्तिं च साधुकाव्यनिबन्धनम् ॥2॥

अधनस्येव दातृत्वं, क्लीबस्येवास्त्रकौशलम्।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥3॥

विनयेन विना का श्रीः, का निशा शशिना विना।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥4॥

गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम्।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ॥5॥

उपेयुषामपि दिवं सन्निबन्धविधायिनाम्।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥6॥

रुणद्धि रोदसी चास्य यावत् कीर्त्तिरनश्वरी ।
तावत् किलाऽयमध्यास्ते सुकृती वैबुधं पदम् ॥7॥

अतोऽभिवाञ्छता कीर्त्तिं स्थेयसीमाभुवः स्थितेः।
यत्नो विदितवेद्येन विधेयः काव्यलक्षणः ॥8॥

शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।
लोको युक्तिः कलाश्चेति मन्तव्याः काव्यहेतवः ॥9॥

शब्दाऽभिधेये विज्ञाय कृत्वा तद्विदुपासनाम्।
विलोक्याऽन्यनिबन्धांश्च कार्यः काव्यक्रियादरः ॥10॥

सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।
विलक्ष्मणा हि काव्येन दुस्सुतेनेव निन्द्यते ॥11॥

अकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥12॥

रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनितामुखम् ॥13॥

रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥14॥

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥15॥

शब्दार्थौ सहितौ काव्यं, गद्यं पद्यञ्च तद्विधा।
संस्कृतं प्राकृतं चान्यदपभ्रंश इति त्रिधा ॥16॥

वृत्तदेवादिचरितशांसि चोत्पाद्यवस्तु च।
कलाशास्त्राश्रयञ्चेति चतुर्धा भिद्यते पुनः ॥17॥

सर्गबन्धोऽभिनेयार्थं तथैवाख्यायिकाकथे।
अनिबद्धञ्च काव्यादि तत्पुनः पञ्चधोच्यते ॥18॥

सर्गबन्धो महाकाव्यं महताञ्च महच्च यत्।
अग्राम्यशब्दमर्थ्यञ्च सालङ्कारं सदाश्रयम् ॥19॥

मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्।
पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत् ॥20॥

चतुर्वर्गाभिधानेऽपि भूयसार्थोपदेशकृत्।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ॥21॥

नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः।
न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥22॥

यदि काव्यशरीस्य न स व्यापितयेष्यते।
न चाभ्युदयभाक्तस्य मुधादौ ग्रहणस्तवौ ॥23॥

नाटकं द्विपदीशम्यारासकस्कन्धकादि यत्।
उक्तं तदभिनेयार्थमुक्तोऽन्यैस्तस्य विस्तरः ॥24॥

प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥25॥

वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।
वक्त्रं चापरवक्त्रञ्च काले भाव्यार्थशंसि च ॥26॥

कवेरभिप्रायकृतैरङ्कनैः कैश्चिदङ्किता।
कन्याहरणसङ्.ग्रामविप्रलम्भोदयान्विता ॥27॥

न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि।
संस्कृतं संस्कृता चेष्टा कथापभ्रंशभाक्तथा ॥28॥

अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥29॥

अनिबद्धं पुनर्गाथाश्लोकमात्रादि तत् पुनः।
युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते ॥30॥

वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे।
तदेव च किल ज्यायः सदर्थमपि नापरम् ॥31॥

गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक्।
गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥32॥

ननु चाश्मकवंशादि वैदर्भमिति कथ्यते।
कामं तथास्तु प्रायेण संज्ञेच्छातो विधीयते ॥33॥

अपुष्टार्थमवक्रोक्ति प्रसन्नमृजु कोमलम्।
भिन्नं गेयमिवेदं तु केवलं श्रुतिपेशलम् ॥34॥

अलङ्कारवदग्राम्यमर्थ्यं न्याय्यमनाकुलम्।
गौडीयमपि साधीयो वैदर्भमिति नान्यथा ॥35॥

न नितान्तादिमात्रेण जायते चारुता गिराम्।
वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः ॥36॥

नेयार्थं क्लिष्टमन्यार्थमवाचकमयुक्तिमत्।
गूढशब्दाभिधानञ्च कवयो न प्रयुञ्जते ॥37॥

नेयार्थं नीयतेऽनुक्तो यस्यार्थः कृतिभिर्बलात्।
शब्दन्यायानुपारूढः कथञ्चित् स्वाभिसन्धिना ॥38॥

मायेव भद्रेति यथा सा चाऽसाध्वी प्रकल्पना।
वेणुदाकेरिति च तान्नियन्ति वचनाद्विना ॥39॥

क्लिष्टं व्यवहितं वित्तेरन्यार्थं विगमे यथा।
विजह्रुस्तस्य ताः शोकं क्रीडायां विकृतञ्च तत् ॥40॥

हिमापहामित्रधरैर्व्याप्तं व्योमेत्यवाचकम्।
साक्षादरूढं वाच्येऽर्थे नाभिधानं प्रतीयते ॥41॥

अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः ॥42॥

अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥43॥

यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते ॥44॥

गूढशब्दाभिधानञ्च न प्रयोज्यं कथञ्चन।
सुधियामपि नैवेदमुपकाराय कल्पते ॥45॥

असितर्त्तितुगद्रिच्छित् स्वःक्षितां पतिरद्विदृक्।
अमिद्भिः शुभ्रदृग्दृष्टैर्द्विषो जेघ्रीयिषीष्ट वः ॥46॥

श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम् ॥47॥

विड्वर्च्चोविष्ठितक्लिन्नच्छिन्नवान्तप्रवृत्तयः।
प्रचारधर्षितोद्गारविसर्गह्लादयन्त्रताः ॥48॥

हिरण्यरेताः सम्बाधः पेलवोपस्थिताण्डजाः।
वाक्काटवादयश्चेति श्रुतिदुष्टा मता गिरः ॥49॥

अर्थदुष्टं पुनर्ज्ञेयं यत्रोक्ते जायते मतिः।
असभ्यवस्तुविषया शब्दैस्तद्वाचिभिर्यथा ॥50॥

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥51॥

पदद्वयस्य सन्धाने यदनिष्टं प्रकल्पते।
तदाहुः कल्पनादुष्टं सशौर्याभरणो यथा ॥52॥

यथाऽजिह्लददित्यादि श्रुतिकष्टञ्च तद्विदुः।
न तदिन्छन्ति कृतिनो गण्डमप्यपरे किल ॥53॥

सन्निवेश विशेषात्तु दुरुक्तमपि शोभते।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥54॥

किञ्चिदाश्रयसौन्दर्याद् धत्ते शोभामसाध्वपि।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥55॥

आपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे।
सङ्गमात्पाण्डुशब्दस्य गण्डः साधु यथोदितम् ॥56॥

अनयाऽन्यदपि ज्ञेयं दिशा युक्तमसाध्वपि।
यथा विक्लिन्नगण्डानां करिणां मदवारिभिः ॥57॥

मदक्लिन्नकपोलानां द्विरदानां चतुश्शती।
यथा तद्वदसाधीयः साधीयश्च प्रयोजयेत् ॥58॥

एतद् ग्राह्यं सुरभि कुसुमं ग्राम्यमेतन्निधेयं
धत्ते शोभां विरचितमिदं स्थानमस्यैतदस्य ।
मालाकारो रचयति यथा साधु विज्ञाय मालां
योज्यं काव्येष्ववहितधिया तद्वदेवाऽभिधानम् ॥59॥

**इति श्रीभामहालङ्कारे प्रथमः परिच्छेदः ।**

## 8. मार्गद्वये गुणाः

### दण्डी–काव्यादर्शः (I- 40-102)

(व्याख्याः– A. तरुणवाचस्पतिः
B. हृदयङ्गमा (अज्ञातकर्तृका)

**अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥40॥**

A. अथ सन्दर्भकाव्यगुणभेदेन द्वैविध्यं दर्शयितुम् उपक्रमते–अस्तीति। 'वैदर्भी साथ पाञ्चली गौडीयावन्तिका तथा। लाटीया मागधी चेति षोढा रीतिर्हि गद्यते'–इति प्रसिद्धा रीतयः षट्। तत्र इतरा रीतयः चतस्रः परस्परं स्वल्पभेदाः; वैदर्भगौडीयौ तु मार्गौ प्रस्फुटभेदौ मतौ। तौ वर्ण्येते लक्ष्यलक्षणैः प्रदर्श्येते॥

B. सम्प्रति गद्यपद्यात्मकस्य संस्कृतस्यैव गौडवैदर्भानुसारेण विशेषं दर्शयितुमाह–अस्तीति। वैदर्भो नाम मध्यमदेशात् दक्षिणतो देशः; तत्र भवा हि वैदर्भाः; तेषाम् इयं रीतिः वैदर्भी। गौडो नाम मध्यमदेशात् पूर्वो जनपदः; तस्मिन् जनपदे भवाः गौडीयाः। अत्र वैदर्भगौडीययोः मार्गद्वययोः भेदः कथ्यते॥

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥41॥**

**इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।**
**एषां विपर्ययः प्रायो दृश्यते गोडवर्त्मनि ॥42॥**

A. मार्गभेदकरान् गुणान् उद्दिशति–श्लेषः इति द्वयेन प्रायश्शब्दः अर्थव्यक्त्यौदार्यसमाध्यादयो गुणः उभयसाधारणाः इति दर्शयति ॥

B. प्रतिज्ञातभेदकरान् गुणान् दर्शयितुमाह–श्लेष इति। एषां श्लेषादीनां विपर्ययः अन्यथात्वं गौडप्रस्थाने लक्ष्यते। प्रायोग्रहणं साकल्यनिवृत्यर्थम्। तेन अर्थव्यक्त्यौदार्यसमाधिगुणाः उभयमार्गतुल्याः इति गम्यते ॥

**श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।**
**शिथिलं मालतीमाला लोलालिकलिला यथा ॥43॥**

**अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् ।**
**वैदर्भैर्मालतीदाम लङ्घितं भ्रमरैरिति ॥44॥**

A. श्लेषं तद्विपर्ययं शैथिल्यं च लक्षयति–श्लिष्टमिति। श्लिष्टं श्लेषगुणयुक्तं; वाक्यम् इति शेषः। अल्पप्राणाक्षरोत्तरम्–अल्पप्राणाक्षरमयमेव यद्वाक्यं–तत् शिथिलम्। तथा च वक्ष्यति–'बन्धशैथिल्यदोषो हि दर्शितः सर्वकोमलैः'–इति। तद्विपरीतं श्लिष्टम्। शैथिल्यश्लेषयोः उदाहरणे मार्गभेदेन दर्शयति–मालतीमालेति मालतीदामेति च ॥

B. उक्तान् गुणान् अत्र सोदाहरणं क्रमेण अनुसन्धत्ते–श्लिष्टमिति। श्लेष एव श्लिष्टम् इत्युच्यते; अत्र भावे क्तः। अस्पृष्टशैथिल्यम्–वर्णानां गुम्फनसमये यत् शिथिलत्वेन न प्रतिभाति तत् अस्पृष्टशैथिल्यम्। तदपि महाप्राणवद्भिः अक्षरैः भवितव्यम्; तदन्यत् शिथिलम् अल्पप्राणाक्षरभूयिष्ठम् अन्तस्स्थाभिः वर्गाणां प्रथमतृतीयपञ्चमाक्षरैश्च भवितव्यम्। क्रमोल्लङ्घनेन शिथिलस्य उदाहरणम् आह–मालतीमालेति। यत् शिथिलस्य उदाहरणसूचनं तदेतत् शिथिलमपि अनुप्रासबुद्ध्या गौडैः इह स्वीकृतम् इत्याह–अनुप्रासेति। शिथिलमपि तत् पूर्वोक्तम् अनुप्रासबुद्ध्या गौडेः स्वीकृतम् वैदर्भैस्तु रचनादाढर्यात् श्लेषः स्वीकृतः– मालतीदाम लङ्घितं भ्रमरैः इति। लङ्घितम् आक्रान्तम्; इति शब्दः उदाहरणे॥

**प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।**
**लक्ष्म लक्ष्मीं तनोतीनि प्रतितीसुभगं वचः ॥45॥**

A. प्रसादं लक्ष्यलक्षणाभ्यां दर्शयति – प्रसादवदिति।

B. प्रसादस्य उदाहरणम् आह – प्रासादवदिति ।

**व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते ।**
**यथानभ्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥46॥**

A. प्रसादविपर्ययं गौडेष्टं दर्शयति—व्युत्पन्नमिति॥

B. अप्रसादस्य उदाहरणं दर्शयन् आह—व्युत्पन्नमिति। गौडीयैः पौरस्त्यैः नातिरूढमपि अतिप्रगल्भमपि ईहितं दृश्यते। कुतः ? व्युत्पन्नम् इति। तैः एवं स्वीकृतम् इत्याह—यथेति। अनभ्यर्जुनाब्जन्म नीलोत्पलम्; वलक्षगुः श्वेतभानुः ॥

**समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः।**
**बन्धे मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥47॥**

A. समतां लक्षयति— सममिति। बन्धाः शब्दसन्दर्भाः त्रिविधाः— मृदुवर्णजनितो बन्धः, अमृदुस्फुटवर्णजनितो बन्धः, मृदुस्फुटमिश्रवर्णजनितो बन्धश्चेति। मिश्रवर्णजनितो बन्धो मध्यमः। तेषु बन्धेषु एकैकस्मिन् अविषमत्वम् एकरूपत्वं समत्वम् ॥

B. समोदाहरणं सममिति। समं बन्धेषु समत्वेन स्वीकृतम्; अविषमम् इति यावत्। ते हि बन्धाः मृदुस्फुटमिश्रत्वात् त्रिविधा भवन्ति। मृद्वक्षरैः अल्पप्राणाक्षरैः ग्रथिताः मृदवः। नमृदुस्फुटाक्षरैः घोषवद्भिः ग्रथिताः स्फुटाः। मिश्राक्षरैः ग्रथिताः समाः एषु मृदुस्फुटौ गौडीयैः स्वीकृतौ। मध्यमस्तु अविषमः इति वैदर्भैः स्वीकृतः ॥

**कोकिलालापवाचालो मामेति मलयानिलः।**
**उच्चलच्छीकराच्छाच्छनिर्झराम्भः कणोक्षितः ॥48॥**

**चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः।**
**स्पर्धते रुद्धमद्धैर्यो वररामनानिलैः ॥49॥**

**इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरम्।**
**अवेक्षमाणा ववृते पौरस्त्या काव्यपद्धतिः ॥50॥**

A. त्रयाणां बन्धानां त्रिभिः अर्धैः उदाहरणानि आह—कोकिलेति। अत्रबन्धेषु मध्यमबन्धसत्त्वं वैदर्भेष्टम्। मृदुबन्धे विशेषाभावात्, स्फुटबन्धे सौकुमार्याभावाच्च, तौ न वैदर्भाभिमतौ इति बोद्धव्यम्। समाताविपर्ययं वैषम्यं

दर्शयति–स्पर्धत इति। समता विपर्ययस्य गौडेष्टत्वं दर्शयति–इतीति। उपमारूपः अर्थालङ्कारः स्फुटवर्णानुप्रासश्च विषमपरिग्रहहेतुः॥

B. मृदूदाहरणं कोकिलेत्यादि। स्फुटोदाहरणम् उच्चलदिति। मिश्रोदाहरणं चन्दनेत्यादि। उक्तं निगमयति–इतीति। इति वैषम्यम् अनालोच्य, अर्थालङ्कारयोः डम्बरम् अतिसुभगताम् आलोक्य च, गौडानां काव्यपद्धतिः ववृते प्रवृत्ता ॥

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।**
**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥51॥**

A. मधुरं लक्षयति–मधुरमिति। शब्दाश्रयम् अर्थाश्रयं च विबुधमनोरञ्जनं माधुर्यं द्विविधम् ॥

B. माधुर्यमाह–मधुरमिति। वाचि शब्दे रससमुपेते वस्तुनि अर्थे च रसस्थितिः यस्य तत् मधुरं नाम॥

**यया कयाचित् श्रुत्या यत् समानमनुभूयते।**
**तद्रूपादिपदासक्तिः सानुप्रासा रसावहा ॥52॥**

A. तत्र शब्दमाधुर्यं लक्षयति–ययेति। यया कयापि श्रुत्या, कण्ठाद्येकस्थानजननप्रयुक्तेन स्पृष्टतादिप्रयत्नजन्येन वा एकेन ध्वनिविशेषेण यच्च रूपं समानम् अनुभूयते, तस्य शब्दरूपस्य, तद्रूपादिपदासक्तिः–तद्रूपेण तच्छ्रुतिमता आदिपदेन पूर्वानुभूतेन पदेन शब्देन सह, या आसक्तिः सा रसावहा; स्थानादिजन्यैकश्रुतिमतोः पदयोः वर्णयोर्वा स्थितिरपि प्रकृष्टा श्रुतिसाम्यनामरसावहेत्यर्थः। सानुप्रासा–अनुप्रासश्च रसावहः इति यावत् एवं द्विविधं शब्दमाधुर्यम्॥

B. माधुर्यस्वरूपं प्रदर्श्य प्रथमं शब्देन इदं दर्शयितुमाह–ययेति। तद्रूपं तथाविधं रूपम् आदिः यस्य तस्य आसक्तिः या सा सानुप्रासा। शब्देन रसावहा सा भवति ॥

**एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः।**
**तदा प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥53॥**

A. तत्र श्रुतिसाम्यस्य उदाहरणमाह—एष इति षरयोः मूर्धन्यत्त्वात् श्रुतिसाम्यम्; जायेति तालव्यत्वात्, दालेति दन्त्यत्वात्, पबयोरोष्ठ्यत्वात्, तदेति तिथेति च दन्त्यत्वात्॥

B. प्राप्त-ब्राह्मण-प्रभृतीनां रेफः पृथक्प्रयुक्तराजेतिरेफपदस्य आदिभूतत्वात् समानम् अनुभूयते॥

**इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः।**
**अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम् ॥54॥**

A. श्रुतिसाम्यवर्णानुप्रासौ वैदर्भगौडयोः विभाजितौ इत्याह—इतीति ॥

B. उक्तः प्रकारो वैदर्भैः स्वीकृतः, न तावत् गौडैः इत्याह—इतीति। इदम् इत्युक्तप्रकारानुप्रासः गौडैः न आदृतम्। तेषां गौडानाम् अन्योऽनुप्रासः अतीव हि प्रियो भवति। वैदर्भैः अनुप्रासादपि इदमेव सुतरां स्वीकृतं भवति इत्यर्थः॥

**वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च।**
**पूर्वानुभवसंस्कारबोधिनी यद्यदूरता ॥55॥**

A. अनुप्रासं लक्षयति—वर्णेति। पादेषु—पादादिषु पदेषु, पदेषु—पदादिषु, इत्यर्थः॥

B. गौडप्रियस्य अनुप्रासस्य लक्षणं दर्शयितुमाह—वर्णावृत्तिरिति। पादेषु पदेषु च बहुशो वर्णानाम् आवृत्तिः यदि क्रियते, तदा तत्र अनुप्रासः स्यात्। आवृत्तेः, पूर्वमुच्चारितस्यैव वर्णस्य पुनरुच्चारणे क्रियमाणे, पूर्वानुभूत-संस्कारबोधिनी अदूरता अस्ति चेत् तदैव तत्र अनुप्रासो भवित ॥

**चन्द्रे शरन्निशोत्तंसे कुन्दस्तबकविभ्रमे।**
**इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम् ॥56॥**

A. तत्र पादानुप्रासं दर्शयति—चन्द्र इति ॥

B. पादानुप्रासोदाहरणमाह—चन्द्र इति। अत्र चतुर्षु पादेषु चन्द्र कुन्द इन्द्र सन्द इति क्रमेण नकारदकारौ अनुसृतौ भवतः। चन्द्र इन्द्र, कुन्द सन्द, इति केचित् आवृत्तिं पश्यन्ति ॥

**चारु चान्द्रमसं भीरु बिम्बं पश्यैतदम्बरे।**
**मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥57॥**

A. अथ पदानुप्रासं दर्शयति–चार्विति।

B. पदानुप्रासं दर्शयति–चार्विति। चकारद्वयं बकारद्वयं मकारद्वयं नकारद्वयं च पदे सन्निकृष्टानुप्रासत्वेन स्वीकृतं भवित। उद्यतम् उदितम् ॥

**इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम्**
**न तु रामामुखाम्भोजसदृशश्चन्द्रमा इति ॥58॥**

A. 'पूर्वानुभूतसंस्कारबोधिनी यद्यदूरता' इत्यस्य व्यावृत्तिं दर्शयति–इतीति॥

B. इतीति। नातिदूरान्तरस्थितिम् इति दूरान्तरस्थितिरहितम् अनुप्रासम् इच्छन्ति; रामामुखेत्याद्युदाहरणे दूरान्तरस्थितिमतीं मा इत्यस्यावृत्तिम् अनुप्रासत्वेन नाङ्गीकुर्वन्ति ॥

**स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः।**
**च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः ॥59॥**

**इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति।**
**अतो नैवमनुप्रासं दाक्षिणात्यः प्रयुञ्जते ॥60॥**

A. बन्धपारुष्यशैथिल्यावहस्य अनुप्रासस्य न वैदर्भेष्टत्वमित्याह–स्मर इति द्वयेन। 'इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः। अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम्'–इत्यत्र प्रायश्शब्देन उभयोः श्रुतिसाम्यानुप्रासयोः वैदर्भगौडयोरिष्टतरत्वमुक्तम्; न तु अनिष्टत्वम्, बन्धपारुष्यशैथिल्यावहस्य अनुप्रासविशेषस्य वैदर्भानिष्टत्वकथनात्; इत्यवगन्तव्यम् ॥

**आवृत्तिमेव सङ्घातगोचरां यमकं विदुः।**
**तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते ॥61॥**

A. आवृत्तिमिति। एकवर्णावृत्ति अनेकवर्णावृत्तिरूपं यत् यमकं दर्शयितव्यं, तत्तु कोमलबुद्धीनामनन्तरावहं विस्तीर्णं च। अतः तृतीये परिच्छेदे दर्शयिष्यते ॥

B. स्मर इत्यादिना निर्दिष्टवर्णावृत्तिप्रसङ्गेन यमकं प्रस्तुतम्; तत् पश्चात् विधास्यते इत्याह। सङ्घातगोचरां वर्णानां पदानां च समूहविषयभूताम्। तत् यमकं मधुररसेनैव न समुपेतम् इत्यतो हेतोः पश्चात् विधास्यते वक्ष्यते ॥

**कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चतु।**
**तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥62॥**

A. अर्थमाधुर्यमग्राम्यतारूपं दर्शयिष्यति प्रशंसति च—काममिति। उपमोत्प्रेक्षादिः अलङ्कारः सर्वोऽपि अर्थे रसं निषिञ्चतु। तथापि एनम् अर्थरसातिशयम् अग्राम्यतैव भूयसा वहति। सहृदयोद्वेगकरं ग्राम्यं, तद्विपरीतम् अग्राम्यम्। तेन सहृदयसन्तोषकरम् अग्राम्यम् इत्यर्थः॥

B. पूर्वं मधुरगुणलक्षणारम्भे अर्थेऽपि रसवत्ता अस्तीत्युक्तम्; साद्य दर्श्यते—काममिति। सर्वोऽपि अलङ्कारः अर्थे रसं कामं निषिञ्चतु ददातु। तथापि इयम् अग्राम्यतैव अनश्लीलतैव एनं माधुर्यस्य भारं भूयसा अत्यर्थं वहति। ग्राम्यार्थः प्रतिपाद्यते चेत्, स दुष्ट एव भवति ॥

**कन्ये कामयमानं मां न त्वं कामयसे कथम्।**
**इति ग्राम्योऽयमर्थात्मा वैरस्यायै कल्पते ॥63॥**

A. अग्राम्यं दर्शयितुं प्रथमं ग्राम्यं दर्शयति—कन्ये इति ॥

B. ग्राम्योदाहरणमाह—कन्ये इति ॥

**कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः।**
**त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥64॥**

A. अग्राम्यं दर्शयति—काममिति ॥

B. अग्राम्यस्य उदाहरणमाह—काममिति ॥




**शब्देऽपि ग्राम्यतास्त्येव सा सभ्येतरकीर्तनात्।**
**यथा यकारादिपदं रत्युत्सवनिरूपणे ॥65॥**

A. ग्राम्यता नाम दोषो न केवलम् अर्थ एव दृश्यते, शब्देऽपि अस्तीत्याह—शब्देऽपीति। यथा—यकारादिपदं रतिशब्दार्थवाचकम्; यभशब्दः स्वरूपणैव सभ्येतरः इत्यर्थः ॥

B. प्रसङ्गागतां ग्राम्यतां शब्देऽपि दर्शयितुमाह—शब्देऽपि इति। यथा इति उदाहरणदर्शने। यकारादिपदं यभमैथुने इत्यस्मात् यभ याभ इत्येवमादि ॥

**पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः।**
**दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥66॥**

**खरं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति।**
**एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥67॥**

A. पदसन्धिना वाक्यार्थान्तरप्रतीतिकरत्वेन च पुनर्द्विविधं शब्दग्राम्यं दर्शयति—पदेति। यच्छब्दभवच्छब्दौ सन्धिना श्लिष्टौ याभवच्छब्दप्रतीतिकरौ ग्राम्यौ। वीर्यवान् रामः खरं राक्षसं प्रहृत्य हत्वा विश्रान्तः इति वाक्यं, कश्चित् पुरुषः रतौ खरं प्रचण्डं पहृत्य वीर्यवान् विश्रान्तः इति, वाक्यार्थान्तरप्रतीतिकरत्वात् ग्राम्यम्। 'कन्ये कामयमानं माम्'—इत्यत्र वाक्यार्थ एव ग्राम्यत्वमित्यर्थग्राम्यत्वम्; अत्र तु उदाहरणे ग्राम्यवाक्यार्थान्तरप्रतीतिकृत् वाक्यमिति शब्दग्राम्यत्वम्। अर्थग्राम्यत्वशब्दग्राम्यत्वे गौडवैदर्भयोः उभयोरपि मार्गयोः परित्याज्ये इत्याह—एवमादीति ॥

B. अत्र तस्या एव ग्राम्यतायाः प्रकारविशेषमाह—पदेति। पदानां सन्धिः पदसन्धानम्। तस्य वृत्तिः। तया वा वाक्यार्थत्वेन वा दुष्प्रतीतिकरं यत् तदपि ग्राम्यमेव। यथा—या भवतः प्रिया इत्युक्ते, या अङ्गना भवतः प्रिया इति गम्यमेवं; अत्र या भवतः पुरुषस्य प्रिया इति च गम्यते। श्रोतुर्हि अन्तः पदसन्धानप्रतीत्या दुष्प्रतीतिकरम् एतत्। वीर्यवान् पुरुषः कोऽपि खरं तीक्ष्णं प्रहृत्य, प्रहारं कृत्वा, युद्धान्ते विश्रान्तो भवति इत्युक्ते, श्रोतुः कापि दुष्टा वाक्यार्थप्रतीतिः जायते ॥

**भगिनीभगवत्यादि सर्वत्रैवानुमन्यते।**
**विभक्तमिति माधुर्यमुच्यते सुकुमारता ॥68॥**

A. भगिनीति। भगिनीभगवत्यादिपदं ग्राम्यार्थान्तरप्रतीतिकरमपि सर्वत्रैव लोकवेदयोः दृष्टप्रयोगत्वात् न दुष्टम्। विस्तरेणोक्तं माधुर्यम् उपसंहृत्य सौकुमार्यं लिलक्षयिषति ॥

B. भगिनीति। सर्वत्र वैदर्भगौडयोः। अथ सुकुमारम् उच्यते॥

**अनिष्ठुराक्षरप्रायं सुकुमारमिहोच्यते।**
**बन्धशैथिल्यदोषोऽपि दर्शितः सर्वकोमले ॥69॥**

A. तल्लक्षयति—अनिष्ठुरेति अनिष्ठुराक्षरलप्रायं मृद्वक्षरबहुलं निष्ठुराक्षर-मिश्रं सुकुमारम् ॥

B. तस्य लक्षणमाह— अनिष्ठुरेति निष्ठुराः किल क्षकारादयः ; तदन्यत् अनिष्ठुरम्। तद्व्यमिश्रमिह वैदर्भमात्रे सुकुमारमित्युच्यते। सर्वकोमलेषु अक्षरेषु बन्धशैथिल्यदोषो दर्शितः॥

**मण्डलीकृत बर्हाणि कण्ठैर्मधुरगीतिभिः।**
**कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥70॥**

A. सौकुमार्यम् उदाहरति—मण्डलीकृत्येति ॥

B. उदाहरणमाह—मण्डलीकृत्येति। मधुरगीतिभि कण्ठैः उपलक्षिताः ॥

**इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः।**
**सुकुमारतयैवैतदारोहति सतां मनः ॥71॥**

A. सौकुमार्यं प्रशंसति—इतीति। तदर्थः अपूर्वार्थो रसवदर्थो वा न इति अनूर्जितः। तादृशः सुप्रसिद्धः शोभाकरो वा अलङ्कारः उत्प्रेक्षादिश्च नास्ति ॥

B. सुकुमारप्रशंसारूपेण निगमयति—इतीति। अनूर्जितः अतेजिष्ठः। अलङ्कारश्च न सुन्दरः॥

**दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते।**
**न्यक्षेण क्षपितः पक्षः क्षत्रियाणां क्षणादिति ॥72॥**

A. सौकुमार्यविपर्ययं दीप्तमिति नाम्ना अपरे गौडाः स्वीकुर्वते इत्याह—दीप्तमिति। कृच्छ्रोद्यं, कृच्छ्रेण उच्चार्यं, श्रमेण पठनीयम्। न्यक्षेण कात्स्न्येन; 'न्यक्षं कात्स्न्र्ये निकृष्टे च' इति वैजयन्ती ॥

B. सुकुमारस्य प्रत्युदाहरणमाह—दीप्तमिति। अपरैः गौडैः। न्यक्षेण साकल्येन ॥

**अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता।**
**भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ॥73॥**

A. अर्थव्यक्तिं लक्षयति—अर्थव्यक्तिरिति। अनेयत्वम् उपात्तेनैव शब्देन वाक्यार्थप्रतीतिः। अर्थव्यक्तिम् उदाहरति—हरिणेति ॥

B. अर्थव्यक्तिरिति। उक्तेनैव शब्देन विवक्षितार्थसिद्धिः अर्थव्यक्तिः। अनेयत्वं नाम वाक्ये शब्दान्तरस्य अध्याहारानाकाङ्क्षा। अनयेत्वस्य उदाहरणमाह—हरिणेति। अत्र अर्थस्य शब्दान्तरनिरपेक्षता व्यक्ता॥

**मही महावराहेण लोहितादुद्धृतोदधेः।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ॥74॥**

A. अनेयार्थप्रतीत्यर्थं नेयार्थं दर्शयति—महीति।

B. शब्दान्तरसापेक्षत्वस्य उदाहरणं दर्शयति—महीति। अत्र तु लोहितसमुद्रस्य असम्भवात्, केन स लोहितः इति अपेक्षायाम्, उरगरुधिरस्य नेयत्वात्, अध्याहार्योदाहरणमेतत् ॥

**नेदृशं बहुमन्यन्ते मार्गयोरुभयोरपि।**
**न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥75॥**

A. अर्थव्यक्तिः मार्गद्वयसाधारणी इत्याह—नेति। अत्र हेतुमाह—नहीति। आकाङ्क्षासन्निधियोग्यतावशेन पदैः प्रयुक्तैरेव अभिहितानां वाक्यार्थानां प्रतीतिं हित्वा अन्याभिधेयवत्वस्याभावः शब्दन्यायः॥

B. नेति। शब्दन्यायविलङ्घिनी या सा प्रतीतिः सुभगा न। यावदर्थोऽभिमतः तावच्छब्देन भवितव्यम्; शब्दस्यापि यावदर्थप्रतिपादनशक्तिः तावदर्थेन भवितव्यम्; इति शब्दशास्त्रन्यायः॥

**उत्कर्षवान् गुणः कश्चिद्यस्मिन्नुक्ते प्रतीयते।**
**तदुदाराह्वयं तेन सनाथा सर्वपद्धतिः॥76॥**

A. औदार्यं लक्षयति—उत्कर्षवानिति ॥

B. उदारगुणं दर्शयति—उत्कर्षवानिति। सर्वपद्धतिः गौडवैदर्भयोः पद्धतिः, सर्वकाव्यनाटकादिपद्धतयो वा ॥

**अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत्।**
**तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥77॥**

**इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते।**
**अनेनैव पथान्यच्च समानन्यायमूह्यताम् ॥78॥**

A. तदुदाहरति—अर्थिनामिति। तदवस्था कृपणावस्था। त्यागोत्कर्षवत्, शौर्यादिगुणोत्कर्षलक्षकवाक्यम् ऊह्यम् ॥

B. अर्थिनामिति। तदवस्था कृपणा। अन्यच्च शौर्याद्यपि ॥

**श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते।**
**यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः ॥71॥**

A. औदार्यं प्रकारान्तरेण लक्षयति—श्लाघ्यैरिति। वस्तुवैशिष्ट्य-प्रतीतिकृद्विशेषणं दर्शयति—यथेति। कैश्चिदिति उभयविधः उदारार्थः प्रदर्श्यते॥

B. श्लाघ्यैरिति। कैश्चित् आचार्यैः॥

**ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्।**
**पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥80॥**

**तद्गुरूणां लघूनां च बाहुल्याल्पत्वमिश्रणैः।**
**उच्चावचप्रकारं तद्दृश्यमाख्यायिकादिषु ॥81॥**

A. मार्गद्वयसाधरणम् ओजो लक्षयति—ओज इति द्वयेन। तत् ओजः—गुरुबहुलं लघुबहुलम् उत्कलिकाप्रायं पद्यगन्धि इति—बहुप्रकारम्। गुरुबहुलं यथा—'नाकनायकनिकायकामिनी' इति। लघुबहुलं यथा-

अवनिपवनवनगगनदहनतपनतुहिनकिरणयंजमानमयीः' इति। मिश्रं यथा–'त्वङ्गत्तुङ्गतरङ्गदलिततारकम्' इति ॥

B. ओज इति। गद्यस्य जीवितं प्रधानभूतम्; एतद्दाक्षिणात्यानाम्। पद्येऽपि गद्येऽपि गौडानाम् इदम् एकं परायणम् प्रधानगतिः इत्यर्थः। अथ ओजोगुणस्य वृत्तिप्रकारं दर्शयति–तदिति। तत् ओजोगुणसमवेतं, गुरूणां लघूनां च परस्परबाहुल्यात्, अल्पतया च मिश्रणैश्च समेत्य, उच्चावचप्रकारं नैकभेदम्। तत् आख्यायिकादिषु द्रष्टव्यम्॥

**अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा।**
**पीनस्तनस्थिताताम्रवस्त्रेवाभाति वारुणी ॥82॥**

A. क्रमेण उदाहरति–अस्तेति। अस्तमस्तकम् अस्ताचलशिखरम्। वारुणी पश्चिमा दिक्॥

**इति पद्येऽपि पौरस्त्याः बध्नन्त्योजस्विनीर्गिरः।**
**अन्येऽप्यानाकुलं हृद्यमिच्छन्त्योजो गिरां यथा ॥83॥**

**पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका।**
**कस्य कामातुरं चेतो वारुणी न करिष्यति ॥84॥**

A. अयं गुणः गौडानाम् अभिमततमः, दाक्षिणात्याः केचित् केचित् तमङ्गीकुर्वते इत्याह–इतीति। अन्येऽपीति–अनाकुलम् अनुद्भटपदम्। तदुदाहरति–पयोधरेति ॥

B. गद्ये एव ईदृश्यः पर्याकुलाः ओजस्विन्यो द्रष्टव्या गिरः। पद्येऽपि ताः पौरस्त्यैः ग्रथ्यन्ते इत्याह–इतीति। वैदर्भास्तु न ईदृशीः अङ्गीकुर्वन्ति इत्याह। अनाकुलम् आकुलताशून्यं, तेन हृद्यं हृदयहारि इच्छन्ति। उदाहरति–पयोधरेति ॥

**कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात्।**
**तच्चं वार्ताभिधानेषु वर्णनास्वपि दृश्यते ॥85॥**

A. कान्तलक्षणमाह–कान्तमिति। लौकिकार्थानतिक्रमात् लोकानुभवसंवादात् इति यावत् ॥

B. वैदर्भाणां कान्तस्वरूपमाह—कान्तमिति। कान्तं नाम सर्वजगत्कमनीयकम्। तच्च लौकिकार्थानतिक्रमात् लौकिकार्थानुल्लङ्घनेन भवितव्यम्। तत् कान्तं वार्ताभिधानेषु वर्णनासु च विद्यते। वार्ता नाम अन्योन्यकथनम्। वर्णना नाम प्रशंसावचनम्॥

**गृहाणि नाम तान्येव तपोराशिर्भवादृशः।**
**सम्भावयति यान्येवं पावनैः पादपांसुभिः ॥86॥**

**अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः।**
**अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥87॥**

A. कान्तं वार्ताभिधाने वर्णनायां च क्रमेण उदाहरति—गृहाणीति द्वयेन ॥

B. वार्ताभिधानोदाहरणम्—गृहाणीति। वर्णनोदाहरणम्—अनयोरिति। अवकाशो न पर्याप्तः, न परिपूर्णः। बाहुलतान्तरं बाहुलतयोः मध्यम्॥

**लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः।**
**योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः ॥88॥**

A. कान्तिविपर्ययं अत्युक्तिनामगुणं गौडाभिमतं लक्षयति लोकेति ॥

B. भृशम् अतिक्रान्त इव लोकयात्राम्, असन्नपि यः परमार्थतया वक्तुमिष्टः, तेन अर्थेन पौरस्त्याः तुष्यन्ति, न तु वैदर्भाः इत्याह—लोकेति। विदग्धाः पण्डिताः, तुष्टा भवन्ति, अत्युक्तेरभीष्टत्वात् तेषाम्। विदग्धाः इति गौडान् आक्षिपति॥

देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम्।
युष्मत्पादरजः पातधौतनिश्शेषकल्मषम् ॥89॥

**अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।**
**इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥90॥**

A. शब्द इव अर्थे तत् उदाहरति—देवेतिद्वयेन ॥

B. देवेति। देवधिष्ण्यं देवालयः, कल्मषं पापम्। इदमपि वार्तोदाहरणम्; अल्पमित्येतत् वर्णनोदाहरणम्। भवत्याः इदं स्तनजृम्भणम् एवं भावि इति अनालोच्यैव वेधसा आकाशम् अवकाशम् अल्पं निर्मितम्॥

**इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम्।**
**कान्तं भवति सर्वस्य लोकयात्रानुवर्तिनः ॥91॥**

A. अनयोः उदाहरणयोः कान्तिमत्वम् उपपादयति—इतीति। ऋषिकल्पविशिष्टशापानुग्रहक्षमपुरुषोपश्लाघने परिणद्धोद्भिद्यमानस्तन-कन्याविषयेऽपि कथ्यमानम् एतत् कान्तं भवति ॥

B. वार्तावर्णनयोः एवम्भूतं वाक्यं सम्भवति, लोकयात्रानुवर्तिनां कान्तमपि सम्भवति इत्याह—इतीति। एतत् उक्तप्रकारं, विशेषवचसा संस्कृतं, पूज्यमेव लोकयात्रानुवर्तनशीलस्य॥

**इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम्।**
**प्रस्थानं प्राक् प्रणीतं तु सारमन्यस्य वर्त्मनः ॥92॥**

B. इदमिति। अन्यस्य वर्त्मनो वैदर्भस्य सारं—गृहाणि नाम तान्येवेत्यादिश्लोकद्वयं पूर्वोक्तम् ॥

**अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना।**
**सम्यगधीयते यत्र स समाधिः स्मृतो यथा ॥93॥**

**कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च।**
**इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥94॥**

A. सामाधिं लक्षयति—अन्येति। अन्यस्य धर्मः अन्यधर्मः। ततोऽन्यत्र तस्माद्धर्मिणः अन्यस्मिन् धर्मिणि। लोकसीमानुरोधिना अर्थसादृश्यानुरोधिना। सम्यक् युक्तम् आधीयते यत्र तत्र स्यात् समाधिः। समाधिम् उदाहरति—कुमुदानीति। कुमुदेषु कमलेषु च, सङ्कोचविकासयोः सादृश्यात्, निमीलनोन्मेषौ अध्यस्य, निमीलन्ति उन्मिषन्ति इति शब्दौ प्रयुक्तौ॥

B. अन्येति। यत्र यो धर्मः तस्मादन्यत्र स समाधीयते इति समाधिः स्मृतः। उदाहरणम्—कुमुदानीति। कुमुदादिषु लोचनक्रियारोपात् तेष्वपि लोचनक्रियावाची शब्दो लब्धः॥

**निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयात्।**
**अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते ॥95॥**

A. केचित् धर्माः मुख्यधर्मिणः अन्यस्मिन् धर्मिणि आधीयमानाः शोभन्ते, न तु मुख्यधर्मिणि, इत्याह—निष्ठ्यूतेति॥

B. समाधिविषये एव श्लाघ्यानि, पक्षान्तरे ग्राम्याणि, पदानि आह—निष्ठ्यूतेति। निष्ठ्यूतं लालाजलत्यागः; उद्गिरणं नाम जलादेः यथेष्टत्यागः वमनं नाम पूर्वमेव वर्तमानस्य द्रव्यस्य बलात् निष्क्रमणम्। आदिशब्दात् उच्चारादयो गृह्यन्ते। ग्राम्यकक्ष्यां विगाहते हेयकल्पं भवति ॥

**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः।**
**भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः॥96॥**

**इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति।**
**युगपन्नैकधर्माणामध्यासश्च स्मृतो यथा ॥97॥**

A. तत् उदाहरति—पद्मानीति। पद्मेषु अर्कांशुषु च निष्ठीवनवमनोद्गिरण-शब्दाः प्रयुक्ताः शोभन्ते। अपितु निष्ठीवति वधूः, वमति, उद्गिरति वा, इति अहृद्यम्। एकस्मिन् धर्मिणि अनेकधर्माध्यासं केचित् प्रतिषेधन्ति; तान् प्रतिषेधति—युगपदिति ॥

B. उदाहरणम्—पद्मानीति। उद्गीर्णारुणरेणुभिः मुखैः वमन्तीव। उक्तस्य शोभनतां विपर्यासे अशोभतनां च प्रकाश्य अनेकधर्माणामपि एकस्मिन् अध्यासो दृश्यते इत्याह—इतीति। नैकधर्माणाम् अनेकधर्माणाम् ॥

**गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः।**
**अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥98॥**

**उत्सङ्गशयनं सख्याः स्तननं गौरवं क्लमः।**
**इतीमे गर्भिणीधर्मा बहुवोऽप्यत्र दर्शिताः ॥99॥**

A. तमुदाहरति—गुर्विति॥

B. उदाहरणं गुर्विति। स्तननं प्रकाशितस्वनम्। अधित्यका पर्वतानाम् उपरितनमेखला। 'उपाधिभ्यां त्यकन्नासन्नदूरयोः'—इति त्यकन्प्रत्ययः॥

**तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः।**
**कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥100॥**

A. समाधिः उभयोर्मार्गयोः साधारण इत्याह—तदिति ॥

B. तदिति। तदेतत् समाधिवचनं काव्यानां सर्वस्वम्। कविसार्थः विद्वत्परिषत् अत्रापि समाधिगुणः काव्यसर्वस्वम् इति ब्रुवता काव्यमिति समान्योपापदानात् मार्गद्वयस्यापि साधारणः समाधिरभिहितो भवति ॥

**इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात्।**
**तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः ॥101॥**

**इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।**
**तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥102॥**

A. प्रतिपादितं मार्गद्वयभेदमुपसंहरति—इतीति ॥

B. इतीति। उक्तप्रकारेण प्रस्फुटान्तरौ वैदर्भगौडीयौ मार्गौ भिन्नौ। वैदर्भे च गौडे च तत्तत्कविवशात् पुनरपि भेदा भवन्ति; ते तु वक्तुं न शक्यन्ते। विद्यमानोऽपि भेदो वक्तुं न शक्यत इति दृष्टान्तेन समर्थयति—इक्ष्विति। इक्ष्वादीनां माधुर्यस्य अन्योन्यभेदः सुमहान्; तथापि स माधुर्यविशेषः सरस्वत्यापि वक्तुं न शक्यते; स्वसंवेद्य इत्यर्थः। तद्वत् असावपीति यावत् ॥

## 9. रसवदाद्यलङ्काराः, श्लेषविवेचनं च

### उद्भटः–काव्यालङ्कारसारसंग्रहः (iv. 14.27)
### (व्याख्याकारः – राजानकतिलकः)

**रसभावतदाभासवृत्तेः प्रशमबन्धनम्।**
**अन्यानुभावनिःशून्यरूपं यत्तत्समाहितम् ॥14॥**

अनौचित्यप्रवृत्ता रसभांवा रसाभासभावाभासशब्दवाच्याः। तेन शास्त्रविरुद्धानामशास्त्रविरुद्धानां वा रसभावानां या प्रशान्तिर्निबध्यते तत्परिहाररूपत्वात् समाहितम्। न च रसान्तरप्रादुर्भावोऽत्रेत्युक्तमन्यस्य रसस्यानुभावैर्निःशेषेण शून्यम्।

उदाहरणम्–

**अथ कान्तां दृशं दृष्ट्वा (ष्ट्या) विभ्रमाच्च (मांश्च) भ्रमं भ्रुवोः।**
**प्रसन्नं मुखरागं च रोमाञ्चं स्वेदसंकुलम् ॥15॥**

**स्मरज्वरप्रदीप्तानि सर्वाङ्गानि समादधत्।**
**उपासर्पद्गिरिसुतां गिरिशः स्वस्तिपूर्वकम् ॥16॥**

समादधत् निजे रूपेऽवस्थापयन्। अत्र कान्तदृष्ट्यादीनामनुभावानां प्रशमो निबद्धः।

**उदात्तमृद्धिमद्वस्तु चरितं च महात्मनाम्।**
**उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम् ॥17॥**

ऋद्धिः हेमादिधनसंपत्। तद्योगो वस्तुन उदात्तम्।

उदाहरणम्–

**उवाच च यतः क्रोडे वेणुकुञ्जरजन्मभिः।**
**मुक्ताफलैरलंकारः शबरीणामपीच्छया ॥18॥**

**पुष्पेन्द्रनीलवैडूर्यपद्मरागमयैर्वियत्।**
**शिरोभिरुल्लिखद्यस्य शिखरं गन्धमादनम् ॥19॥**

**उत्तरोपत्यका यस्य प्रधानस्वर्णभूमयः।**
**महान् मरकतोर्वीध्रः पादोपान्तं च संश्रितः ॥20॥**

**बभूव यस्य पातालपातिन्यां संक्षये क्षितौ।**
**पतनं न तया सार्धमायामस्तु प्रकट्यभूत् ॥21॥**

तस्य हिमाद्रेर्भवती सुतेति वक्ष्यमाणेन संबन्धः। क्रोडः सूकरः। पुष्यो मणिभेदः। गन्धमादनः शिखरविशेषः। उपत्यकाः पर्वतस्याधरवर्तिनो भूभागाः। प्रधानं स्वर्णं जातरूपादि। उर्वीध्रः गिरिः। संक्षयः कल्पान्तः। भूमेरधोगमनात् भूमिमुक्तस्य हिमवतः कल्पान्त आयामः प्रकटीभूतः। अत्र च रत्नादिसंभारो निबद्धः। एतदेकमुदात्तम्।

अपरमाह—चरितं च माहत्मनाम् उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम्। अर्थप्राप्तावनर्थपरिहारे चोद्यतानां महतां चरितमुदात्तम्। न चात्र रसवदलंकारतेत्युक्तमुपलक्षणतामित्यादि। न ह्यत्र महात्मचरितमङ्गितया स्थितमपित्वङ्गतां गतम्।

उदाहरणम्—

**तस्यादिक्रोडपीनांसनिघर्षेऽपि पुनः पुनः।**
**निष्कम्पस्य स्थितिमतो हिमाद्रेर्भवती सुता ॥22॥**

आदिक्रोड आदिवराहः। अत्र हिमवत्स्थैर्ये मुख्ये भगवतोऽपि वीररसप्रतिपत्तिहेतुश्चरितमवान्तरवाक्यार्थीभूतम्। एवं रसान्तरेष्वप्युदाहार्यम्।

**एक प्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्।**
**स्वरितादिगुणैर्भिन्नैः बन्धः श्लिष्टमिहोच्यते ॥23॥**

**अलंकारान्तरगतां प्रतिभां जनयत्पदैः।**
**द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥24॥**

इहानेकस्यार्थस्य युगपद्विवक्षायां द्वयी गतिः। यतोऽर्थभेदाच्छब्दा भिद्यन्ते। आद्यश्च (?) भट्टोद्भटस्य सिद्धान्तः। तत्रार्थभेदेन भिद्यमानाः शब्दा उदात्तादिगुणैक्यात् प्रयत्नादिसाम्याच्च केचित्तन्त्रेण प्रयोक्तुं शक्यन्ते। तद्बद्धोऽर्थश्लेषः। तदुक्तमेकप्रयत्नोच्चार्याणां बन्धोऽर्थोक्तिविशिष्टं श्लिष्टं

प्रतीयतामिति। अत्रोच्चार्याणामित्येतत्सामर्थ्यात् शब्दानामिति बोद्धव्यम्। केचित् पुनरुदात्तादिगुणभेदात् प्रयत्नभेदाच्च युगपत् प्रयोक्तुं न शक्यन्ते। परस्परच्छायानुकारिणस्तु भविन्त। तद्बद्धे श्लेषः शब्दश्लेषः। तदुक्तम् स्वरितादिगुणैर्भिन्नैः तच्छायां चैव बिभ्रताम्। बन्धः शब्दोक्तिविशिष्टं श्लिष्टम्। इति।

तच्च श्लिष्टमुपमाद्यलंकारप्रतिभामुत्पादयति। नतु तत्रोपमादयः। अन्यत्र लब्धसत्ताकत्वात्। तदुक्तम्—अलंकारान्तरगतां प्रतिभां जनयत्पदैः। इति।

उदाहरणम्—

**स्वयं च पल्लवाताम्रभास्वत्करविराजिनी।**
**प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा ॥25॥**

**इन्दुकान्तमुखी स्निग्धमहानीलशिरोरुहा।**
**मुक्ताश्रीस्त्रिजगद्रत्नं पद्मरागाङ्घ्रिपल्लवा ॥26॥**

**अपारिजातवार्तापि नन्दनश्रीर्भुवि स्थिता।**
**अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ॥27॥**

न केवलं हिमाद्रेरेवंविधस्य त्वं सुता। यावत् स्वयमेवंविधेति च शब्दः। तत्र गौरीपक्षे—किसलयवद्रक्ताभ्यां दीप्यमानाभ्यां शोभेते। सुखेनाप्तुं यन्न शक्यं फलं तत्र लुब्धानामीहितं प्रददाति। इन्दुवत् कान्तं मुखं यस्याः। स्निग्धा अत्यन्तकृष्णाश्च केशा यस्याः। त्यक्ता अलक्ष्मीर्यया। त्रैलोक्ये चोत्कृष्टः(ष्टा)। पद्मवद्रागो ययोः तादृशौ पादपल्लवौ यस्याः। अपगता शत्रुप्रकरचर्चा यस्याः। आह्लादिनी शोभा यस्याः। अप्सु प्रतिबिम्बितो य इन्दुः तद्वत्सुन्दरी। नित्यं च गलन्तो लावण्यबिन्दवो यस्या इति व्याख्या।

सन्ध्यादिपक्षेऽत्र (प्र)ज्वलत्सूर्यमरीचिभिः शोभिता। स्वापफले विश्रान्तौ यो न लुब्धः तद्विषये हितं ददाति। चन्द्रकान्तमहानीलमुक्तापद्मरागा मणिविशेषाः। अविद्यमानपारिजाताख्यवृक्षविशेषवार्ता। देवोद्यानलक्ष्मीः। अविद्यमानैर्बिन्दुभिः सुन्दरीति श्लोकत्रये यथाक्रममुपमारूपकविरोधप्रतिभोत्पत्तिहेतवः श्लेषाः।

अत्र प्रथमश्लोकाद्यावेदित (?) त्रिजगद्रत्नमित्यत्र भुविस्थितेत्यत्र च स्वरादिसाम्यादर्थश्लेषत्वम्। अन्यत्र तु शब्दश्लेषता। तथाहि—

अस्वापेत्यादावैकपद्यो थाथादि (पा. 6-2-144) स्वरेणान्तोदात्तत्वं लघुप्रयत्नत्वं च। पदद्वये तु सत्याद्ये पदे तत्पुरुषे तुल्यार्थेति (पा. 6-2-2) पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। अकारैकारयोश्च गुरुप्रयत्नत्वम्। अन्त्यपदे तु थाथादस्वरेणाद्यु(न्तो)दात्तत्वम्।

द्वितीयस्मिन् श्लोके उक्तैकपदवर्जं सर्वत्रापि भिन्नपदपाठात्प्रयत्नभेदः। मुक्ताश्रीरित्यत्र स्वरभेदोऽपि। बहुव्रीहिपक्षे हि बहुव्रीहौ प्रकृत्ये (पा. 6-2-1) ति पूर्वपदप्रकृतिस्वरत्वम्।

तृतीयस्मिन् श्लोके प्रयत्नभेदः क्वचित् स्वरभेदश्च। अपगतारिजातवार्तत्वे हि बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वम्। अविद्यमानपारिजातवार्तत्वे नञ्सुभ्यामि (पा. 6-2-172) त्यन्तोदात्तत्वम्। नन्दनश्रीरित्यत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं तत्पुरुषे तु समासान्तोदात्तत्वम्। अबिन्दुवत्सुन्दरीत्यत्रोपमानत्वात्तपुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरः। तस्य सप्तम्यन्तपूर्वपदत्वादनेनैव सूत्रेण प्रकृतिस्वरेणाद्युदात्तत्वम्। अबिन्दुसुन्दरीत्यत्र त्वव्ययत्वान्नञ्पूर्वपदप्रकृतिस्वरेण तदेव। तेन नात्र स्वरभेदः।

एतच्च श्लेषलक्षणं परीक्ष्यमाणमयुक्तमिव प्रतिभाति।

तथाहि—

*ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते*
*तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः।*
*तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो*
*ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥*

इत्यादौ श्लेषे प्राप्तप्रतिष्ठे पल्लवाताम्रेत्यादौ संकरत्वमेव युक्तम्। अथवा न्यायपरीक्षायामुपमारूपत्वमेव।

तथाहि—यथा गुणक्रियासाम्य उपमा तथा शब्दमात्रसाम्येऽपि दृश्यते। न च तत्र श्लेषत्वमिति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वप्रसङ्गात्। गुणक्रियासाम्ये सा भविष्यतीति चेत्। न अर्थश्लेषस्य निर्विषयतापत्तिप्रसङ्गात्। अथास्मदुपदर्शितशब्दश्लेषवदुपमाविरहितोऽर्थश्लेषस्य विषयः कल्प्यते। तद्द्वयोरन्यत्र लब्धसत्ताकयोरेकत्र संनिपाते संकरतैव प्राप्नोति। अपि च गुणक्रियासाम्यमुपमा शब्दसाम्यं तु श्लेष इति विशेषस्या(न)भिधानात्

शब्दसाम्यमुपमाया विषयः, श्लेषस्य तूपमाविरहित इति पल्लवेत्यादावुपमैव न्याय्या। एवं च 'प्रसाध्यते स्मे' (**का-सा-सं.** 1-27) त्यादावेकदेश-विवर्तिरूपकमुचितम्। अन्यथास्य श्लिष्टत्वं वा वाच्यं स्यात्।

न च भास्वत्करविराजितेत्यर्थश्लेष उपपन्नः। वैचित्र्यमलंकारोऽभिधीयत इति कविप्रतिभासंरम्भगोरचरोर्थोऽलंकार्यः। तद्धर्मश्चालंकार्यः(रः)। न च भास्वदित्यादावर्थः संरम्भगोचर इति शब्दस्यालंकृतत्वम्। काव्ये दोष-गुणालंकाराणां च शब्दार्थगततयाऽन्वयव्यतिरेकाभ्यां विभागः क्रियते। न च भानुदीप्यमानादिशब्दसद्भावेऽलंकारोऽत्रेति शब्दान्वयव्यतिरेकानुविधायिनोऽस्य शब्दालंकारत्वमेव युक्तम्। एकप्रयत्नोच्चार्याणामित्यनेकाक्षेपे शब्दानां श्लिष्टताऽभ्युपगतैवेत्यर्थोक्तिविशिष्टमित्यन्तःशून्यमेव। अभङ्गसभङ्गत्वे-नानयोस्तु शब्दश्लेषयोर्भेदः।

अर्थश्लेषस्य तु

*आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे*
*कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः।*
*बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे*
*बाले लज्जा प्रलीना नहि नहि सरले चोलकः किं त्रपाकृत्॥*

इत्याद्युदाहरणं देयम्।

एवं चाबिन्दुसुन्दरीत्यादौ शब्दालंकारो विरोधः। अत्र हि श्लेषस्य प्रतिभामात्रं न तु प्ररोहः। न च विरोधाभास इव विरोधः श्लेषाभासः श्लेषः। एवमन्येऽपि शब्दालंकारा ज्ञेयाः।

तथाहि रुद्रटेनोक्तम्—

*स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किंतु।*
*आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः॥* (**का.** 4-32)

इति। उदाहृतं च—

*यदनेकपयोधिभुजस्तवैव सदृशोऽस्यहीनसुरतरसः।*
*ननु बलिजितः कथं ते सदृशस्तदसौ सुराधिकृतः॥*

*वसुधामहितसुरा जितनीरागमना भवांश्च वर्षाश्च।*
*सुरचितवराहवपुषस्तव च हरेश्चोपमा घटते॥*

(रुद्र. का. 4-33,34)

इति। एवं चेह चतुर्थं रूपकं श्लेषव्यतिरेकश्च। यदुक्तं तस्योक्तनयेन शब्दालंकारत्वमेव युक्तम्। एवमादौ शब्दमूलालंकारे(रो) न तु शब्दस्यालंकार इति चेत्। उक्तमत्र वैचित्र्यमलंकार इति। यद्वैचित्र्यं तस्यालंकार इति यथोक्तमेव साधु। भवन्तु वा परमेवंभूता उभयस्यालंकाराः नार्थस्येति विचार्यमेतद्विद्वद्भिः। न तु झटित्येवासूचितव्यम्॥

इत्युद्भटालंकारविवृतौ चतुर्थो वर्गः।

## 10. गुणाः रीतयश्च

### वामनः – काव्यालङ्कारसूत्रवृत्तिः ( I.ii. 1-21)

**द्वितीयोऽध्यायः।**

प्रयोजनस्थापना अधिकारिनिरूपणार्थमाह–

**अरोचकिनः सतृणाभ्यवहारिणश्च कवयः ॥1॥**

इह खलु द्वये कवयः संभवन्ति–अरोचकिनः, सतृणाभ्यवहारिणश्चेति। अरोचकि-सतृणाभ्यवहारिशब्दौ गौणार्थौ। कोऽसावर्थः? विवेकित्वमविवेकित्वं चेति

तदाह–

**पूर्वे शिष्याः, विवेकित्वात् ॥2॥**

पूर्वे खल्वरोचकिनः, शिष्याः शासनीयाः। विवेकित्वाद्विवेचनशीलत्वात्।

**नेतरे, तद्विपर्ययात् ॥3॥**

इतरे सतृणाभ्यवहारिणो, न शिष्याः। तद्विपर्ययादविवेचनशीलत्वात्। न च शीलमपाकर्तुं शक्यम्।

नन्वेवं न शास्त्रं सर्वानुग्राहि स्यात्, कुतस्तदुपादीयते तदाह–

**न शास्त्रमद्रव्येष्वर्थवत् ॥4॥**

न खलु शास्त्रमद्रव्येष्वविवेकिष्वर्थवत्।

निदर्शनमाह–

**न कतकं पङ्कप्रसादनाय ॥5॥**

नहि कतकं पयस इव पङ्कस्य प्रसादनाय प्रभवति।

अधिकारिणो निरूप्य रीतिविनिश्चयार्थमाह–

**रीतिरात्मा काव्यस्य ॥6॥**

रीतिर्नामेयमात्मा काव्यस्य। शरीरस्येवेति वाक्यशेषः।

का पुनरियं रीतिरित्याह—

**विशिष्टा पदरचना रीतिः ॥7॥**

विशेषवती पदानां रचना रीतिः।

कोऽसौ विशेष इत्यत आह—

**विशेषो गुणात्मा ॥8॥**

वक्ष्यमाणगुणरूपो विशेषः।

**सा त्रिधा—वैदर्भी गौडीया पाञ्चाली चेति ॥9॥**

सा चेयं रीतिस्त्रिघा भिद्यते—वैदर्भी, गौडीया, पाञ्चाली चेति।

किं पुनर्देशवशाद्द्रव्यवद्गुणोत्पत्तिः काव्यानाम्, येनायं देशविशेषव्यपदेशः? नैवमम्। यदाह—

**विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥10॥**

विदर्भगौडपाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वात्तद्देशसमाख्या। न पुनर्देशैः किंचिदुपक्रियते काव्यानाम्।

तासां गुणभेदाद्भेदमाह—

**समग्रगुणोपेता वैदर्भी ॥11॥**

समग्रैरोजः प्रसादप्रभृतिभिर्गुणैरुपेता वैदर्भी नाम रीतिः।

अत्र श्लोकः—

*'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता।*
*विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥'*

तामेतामेवं कवयः स्तुवन्ति—

*'सति वक्तरि सत्यर्थे सति शब्दानुशासने।*
*अस्ति तन्न विना येन परिस्रवति वाङ्मधु॥'*

अत्रोदाहरणम् (शाकुं. II-6)–

*'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं*
*छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।*
*विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले*
*विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥*

**ओजःकान्तिमती गौडीया** ॥12॥

ओजः कान्तिश्च विद्येते यस्यां सा ओजःकान्तिमती गौडीया नाम रीतिः। माधुर्यसौकुमार्ययोरभावात् समासबहुला अत्युल्बणपदा च।

अत्र श्लोकः–

*'समस्तात्युद्भटपदामोजः कान्तिगुणान्विताम्।*
*गौडीयामिति गायन्ति रीतिं रीतिविचक्षणाः॥'*

उदाहरणम् (महावीरच० II-54)–

*'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-*
*ष्टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः।*
*द्राक्पर्यस्तकपालसंपुटमितब्रह्माण्डभाण्डोदर-*
*भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति॥'*

**माधुर्यसौकुमार्योपपन्ना पाञ्चाली** ॥13॥

माधुर्येण सौकुमार्येण च गुणेनोपपन्ना पाञ्चाली नाम रीतिः। ओजःकान्त्यभावादनुल्बणपदा विच्छाया च।

तथा च श्लोकः–

*'आश्लिष्टश्लथभावां तु पुराणच्छाययान्विताम्।*
*मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः॥'*

अत्रोदाहरणम्–

*'ग्रामेऽस्मिन्पथिकाय पान्थ! वसतिर्नैवाधुना दीयते*
*रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा।*

*तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं*
*येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति॥'*

एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति।

**तासां पूर्वा ग्राह्या, गुणसाकल्यात् ॥14॥**

तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या, गुणानां साकल्यात्।

**न पुनरितरे, स्तोकगुणत्वात् ॥15॥**

इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये, स्तोकगुणत्वात्।

**तदारोहणार्थमितराभ्यास इत्येके ॥16॥**

तस्या वैदर्भ्या एवारोहणार्थमितरयोरपि रीत्योरभ्यास इत्येके मन्यन्ते।

**तत्तु न; अतत्त्वशीलस्य तत्त्वानिष्पत्तेः ॥17॥**

नह्यतत्त्वं शीलयतस्तत्त्वं निष्पद्यते।

निदर्शनार्थमाह—

**न शणसूत्रवानाभ्यासे त्रसरसूत्रवानवैचित्र्यलाभः ॥18॥**

नहि शणसूत्रवानमभ्यस्यन् कुविन्दस्त्रसरसूत्रवानवैचित्र्यं लभते।

**सापि समासाभावे शुद्धवैदर्भी ॥19॥**

सापि वैदर्भी रीतिः शुद्धवैदर्भी भण्यते, यदि समासवत्पदं न भवति।

**तस्यामर्थगुणसंपदास्वाद्या ॥20॥**

तस्यां वैदर्भ्यां अर्थगुणसंपदास्वाद्या भवति।

**तदुपारोहादर्थगुणलेशोऽपि ॥21॥**

तदुपधानतः खल्वर्थगुणलेशोऽपि स्वदते। किमङ्ग! पुनरर्थगुणसंपत्। तथा चाहुः—

*किं त्वस्ति काचिदपरैव पदानुपूर्वी*
*यस्यां न किंचिदपि किंचिदिवावभाति।*

*[आनन्दयत्यथ च कर्णपथं प्रयाता*
*चेतः सताममृतवृष्टिरिव प्रविष्टा ॥]*

*वचसि यमधिशय्य स्यन्दते वाचकश्री-*
*र्वितथमवितथत्वं यत्र वस्तु प्रयाति।*
*उदयति हि स तादृक् क्वापि वैदर्भरीतौ*
*सहृदयहृदयानां रञ्जकः कोऽपि पाकः॥*

## 11. काव्यप्रयोजनानि, हेतवश्च

### रुद्रटः – काव्यालङ्कारः (I. 4-22)
### (व्याख्याकारः – नमिसाधुः)

अथ काव्यकरणस्यैव तावत्किं प्रयोजनमित्याह–

**ज्वलदुज्ज्वलवाक्प्रसरः सरसं कुर्वन्महाकविः काव्यम् ।**
**स्फुटमा कल्पमनल्पं प्रतनोति यशः परस्यापि ॥4॥**

ज्वलन्देदीप्यमानोऽलंकारयोगात् उज्ज्वलो निर्मलो दोषाभावात् वाचां गिरां प्रसरः प्रबन्धो यस्य स ज्वलदुज्ज्वलवाक्प्रसरः। सरसं सशृङ्गारादिकम्, कुर्वन्रचयन्, काव्यं कवेः कर्म, यत एवैवंगुणस्तत एव महाकविर्बृहत्काव्यकर्ता, स्फुटं प्रकटम्, आ कल्पं युगान्तस्थायि, अनल्पमस्तोकम्। जगद्व्यापीत्यर्थः। प्रतनोति विस्तारयति, यशः कीर्तिम्, परस्य काव्यनायकस्य संबन्धि। अपिशब्दोऽत्र विस्मये। चित्रमिदं यत्कविः स्वल्पायुरप्येवंविधं यशस्तनोति। आत्मनोऽपीति तु व्याख्याने 'स्फारस्फुरदुरुमहिमा' (I.21) इत्याद्यनर्थकं स्यात्, गतार्थत्वात्॥

ननु देवगृहमठादिकं कारयित्वा स्वयमेव नायकः स्वयशो विस्तारयिष्यति, किं कवेस्तदर्थं काव्यकरणेनेत्याशङ्क्याह–

**तत्कारितसुरसदनप्रभृतिनि नष्टे तथाहि कालेन ।**
**न भवेन्नामापि ततो यदि न स्युः सुकवयो राज्ञाम् ॥5॥**

तत्कारितसुरसदनप्रभृतिनीत्यत्र तच्छब्देनोत्तरत्र राज्ञामित्येतत्पदोपात्ताः काव्यनायकाः परामृष्यन्ते। ततः काव्यनायकविधापितेदवगृहादौ कालपर्ययेण नष्टे नाशं गते सति। तथा हीति हिशब्दो यस्मादर्थे, तथाशब्द उपप्रदर्शने। न भवेन्न स्यात्, नामाप्यभिधानमपि। आस्तां तावदन्वय इति। ततः सुरसदनादिनाशाद्धेतोः, यदि राज्ञां नायकानां सुकवयो न स्युः। तच्चरितकथाप्रबन्धकर्तार इति। राज्ञामिति काव्यनायकोपलक्षणम् ॥

अथ यदि नाम राज्ञां यशस्तन्वन्ति तथापि किं तेषां यत्ते काव्यकृतौ प्रवर्तन्त इत्याह—

**इत्थं स्थास्नु गरीयो विमलमलं सकललोककमनीयम्।**
**यो यस्य यशस्तनुते तेन कथं तस्य नोपकृतम् ॥6॥**

इत्थम् 'स्फुटमा कल्पमनल्पम्' (I.4) इत्यनेन प्रकारेण, स्थास्नु स्थिरतरम्, गरीयः प्रभूतम्, दोषाभावाच्च विमलम्, अलमत्यर्थम्, सकललोककमनीयं सकलजनकान्तम्, यः कविर्यस्य राजादेर्यशस्तनुते तेन कथं तस्य नोपकृतम्। सर्वथोपकृतं भवतीत्यर्थः॥

ननु यदि कविना परस्योपकृतम्, ततोऽपि किं तस्येत्याह—

**अन्योपकारकरणं धर्माय महीयसे च भवतीति।**
**अधिगतपरमार्थानामविवादो वादिनामत्र ॥7॥**

गतार्थं न वरम्। चकारोऽन्योपकारकरणं चेत्यत्र योज्यः॥

एवं धर्म एव कवेः काव्यकरणे प्रयोजनमित्यभिधायार्थकाममोक्षहेतुत्वमप्याह—

**अर्थमनर्थोपशमं शमसममथवा मतं यदेवास्य।**
**विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः॥8॥**

अर्थमिति। अर्थो धनम्, अनर्थोपशमो विपदभावः, शं सुखम्, असममसाधारणम्। इह लोके कामजं परत्र तु पारम्पर्येण मोक्षजम्। अथवा किमेभिर्बहुभिरुक्तैर्यदेवास्य कवेः संमतं तदेवाप्नोतीति। कीदृशः। विरचितसदलंकारदेवतास्तुतिः॥

किमत्र प्रमाणमिति चेदित्याह—

**नुत्वा तथाहि दुर्गां केचित्तीर्णा दुरुत्तरां विपदम्।**
**अपरे रोगविमुक्तिं वरमन्ये लेभिरेऽभिमतम् ॥9॥**

नुत्वेति। तथाहीत्युदाहरणोपदर्शने। दुर्गाग्रहणं देवतोपलक्षणार्थम्। तथाहि केचिदनिरुद्धादयः शत्रुवश्यादिकां विपदं तीर्णाः। केचिद्धीरदेवादयो नीरुजत्वं प्रापुः। अपरे शत्रुघ्नप्रभृतयोऽभिमतं वरं लब्धवन्तः। एवमन्येऽप्युदाहरणत्वेन तथाविधा ज्ञेया इति॥

इह केचिद्विक्रमादित्यादिजनितं कविजनसत्कारं श्रुत्वाधुनातननृपेभ्यस्तथानवलोक्य प्रेरयेयुर्यथा नृपेभ्यः सकाशान्न किंचित्फलं तथा देवेताभ्योऽपि सांप्रतं न काव्येन किंचित्फलं भविष्यतीत्याशङ्क्याह–

**आसाद्यते स्म सद्यः स्तुतिभिर्येभ्योऽभिवाञ्छितं कविभिः।**
**अद्यापि त एव सुरा यदि नाम नराधिपा अन्ये ॥10॥**

स्फुटार्थं न वरम्। यदि नामेति नामशब्दः परं शब्दार्थे। यदि परं नृपाः। अन्ये देवास्तु त एवेति ॥·

काव्यकरणे प्रयोजनाप्रमेयतामाह–

**कियदथवा वच्मि यतो गुरुगुणमणिसागरस्य काव्यस्य।**
**कः खलु निखिलं कलयत्यलमलघुयशोनिदानस्य ॥11॥**

कियदिति। कियदथ वा भण्यते। यतो यथा सागरे मणीनामानन्त्यमेवं काव्ये गुणनामपीति तात्पर्यम्। खलुर्निश्चये॥

**तदिति पुरुषार्थसिद्धिं साधुविधास्यद्भिरविकलां कुशलैः।**
**अधिगतसकलज्ञेयैः कर्तव्यं काव्यममलमलम् ॥12॥**

तदिति। तस्मात्पुरुषार्थसिद्धिं पूर्णं चिकीर्षुभिः काव्यं कर्तव्यम्। कीदृशैः। अधिगतसकलज्ञेयैः। न त्वनीदृशामपि काव्यकरणं संभवतीत्याह–अलममलम्। सनिर्मलकरणेऽन्येषामसामर्थ्यमित्यभिप्रायः॥

ननु ज्ञातसकलज्ञेयस्य तत्त्वादेव पुरुषार्थसिद्धिर्भविष्यति, किं काव्यकरणेनेत्याह–

**फलमिदमेव हि विदुषां शुचिपदवाक्यप्रमाणशास्त्रेभ्यः।**
**यत्संस्कारो वाचां वाचश्च सुचारुकाव्यफलाः ॥13॥**

फलमिति। हि यस्माज्जानतामिदमेव ज्ञानफलं यच्छुचिपदवाक्यप्रमाणशास्त्रेभ्यो विशदव्याकरणतर्कग्रन्थेभ्यः सकाशात्संस्कारो वाचाम्। ननु वाक्संस्कारस्यापि किं फलमित्याह–वाचश्च सुचारुकाव्यफलाः। च समुच्चये। सुन्दरकाव्यकरणमेव वाक्संस्कारस्य फलमित्यर्थः॥

यथा च काव्यं चारु भवति, यथा च चारु कर्तुं ज्ञायते तथाह—

**तस्यासारनिरासात्सारग्रहणाच्च चारुणः करणे।**
**त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः ॥14॥**

तस्येति। तस्य काव्यस्यासारनिरासादसमर्थादिवक्ष्यमाणदोषत्यागात्, तथा सारग्रहणाद्वक्रोक्तिवास्तवाद्यलंकारयोगाद्धेतोः, चारुत्वगुणोपेतस्य करणे त्रितयमिदं शक्तिव्युत्पत्यभ्यासलक्षणं व्याप्रियते। तस्य तत्र व्यापार इत्यर्थः। तथा च दण्डी— 'नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्। अमन्दाश्चाभियोगोऽस्याः कारणं काव्यसंपदः॥' तत्र शक्त्या शब्दार्थो मनसि संनिधीयेते। तयोः सारासारग्रहणनिरासौ व्युत्पत्त्या क्रियेते। अभ्यासेन शक्तेरुत्कर्ष आधीयत इतिः शक्त्यादिव्यापारः। असारनिरासात्सारग्रहणादिति च पदद्वयोपादानमुभययोगेन चारुत्वमिति ख्यापनार्थम्। तत्राप्यसारस्य प्रागुपन्यासः। तन्निरासस्य प्राधान्यख्यापनार्थः। सकलालंकारयुक्तमपि हि काव्यमेकेनापि दोषेण दुष्येत, अलंकृतं वधूवदनं काणेनेव चक्षुषा। उक्तं च [दण्डिना]— 'तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन। स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्'॥

अथ शक्तिस्वरूपमाह—

**मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य।**
**अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ॥15॥**

मनसीति। असौ शक्तिर्यस्यामविक्षिप्ते चेतसि सदानेकप्रकारस्य वाक्यार्थस्य विस्फुरणम्। यस्यां चाक्लिष्टानि झगित्येवार्थप्रतिपादनसमर्थानि पदानि प्रतिभान्ति। यद्वशाद्धृदयंगमौ नानाविधौ शब्दार्थौ प्रतिभासेते सा शक्तिरित्यर्थः॥

अस्या एव भेदानाह—

**प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति।**
**पुंसा सह जातत्वादनयोस्तु ज्यायसी सहजा ॥16॥**

प्रतिभेति। एषा च शक्तिरपरैर्दण्डिमुख्यैः प्रतिभेत्युक्ता। सा च द्विधा भवति। एवम्। सहजोत्पाद्या चेति। तयोश्च मध्यात्सहजा ज्यायसी प्रशस्यतरा। पुंसा सहोत्पन्नत्वात् ॥

यदि नाम पुंसा सहोत्पन्ना किमित्येतावता ज्यायसीत्याह—

**स्वस्यासौ संस्कारे परमपरं मृगयते यतो हेतुम्।**
**उत्पाद्या तु कथंचिद्व्युत्पत्त्या जन्यते परया ॥17॥**

स्वस्येति। असौ सहजा शक्तिः स्वस्यात्मनः संस्कार उत्कर्ष एव परं केवलम्। अविद्यमानः परोऽन्यो यस्मादसावपरोऽभ्यसस्तं यतो मृगयतेऽन्वेषयति नोत्पत्तावतो ज्यायसी। उत्पत्तौ तु सहजातत्वमेव हेतुः। उत्पाद्या तु व्युत्पत्त्या परयानन्त्वरया कथंचिन्महता कष्टेन जन्यते। अतो न ज्यायसी सा ॥

इदानीं व्युत्पत्तिस्वरूपमाह—

**छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात्।**
**युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥18॥**

छन्द इति। छन्दो जयदेवादि, व्याकरणं पाणिन्यादि, कला नृत्यादिविषयभरतादिप्रणीतशास्त्राणि, लोकाः स्वःप्रभृतयस्तेषु चराचरादिस्वरूपनियमः स्थितिः, पदानि नाममालापठिताः पर्यायशब्दाः, पदार्थस्तेषामेव पदानामभिधेयार्थविषयप्रवृत्तिनैयत्यम्। एतेषां षण्णां छन्दः प्रभृतीनां विज्ञानाद्विशिष्टावगमाद्धेतोर्यो युक्तायुक्तविवेक उचितानुचितत्व-परिज्ञानम्। यथात्रेदं छन्द उचितमनुचितं वेत्यादि सर्वेषु द्रष्टव्यम्। व्युत्पत्तिरियम्। समासेन संक्षेपेण ॥

तर्हि विस्तरव्युत्पत्तेः किं स्वरूपमित्याह—

**विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके।**
**न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्यैषा ॥19॥**

विस्तरत इति। व्युत्पत्तिसंबन्धिनो विस्तारात्किमन्यद्विद्यते यदन्तःपाति न भवति। कुत इत्याह—यस्मादिह लोके न तद्वाच्यमभिधेयमस्ति, न वाचकः शब्दो विद्यते यत्काव्याङ्गं काव्योपकरणं न भवतीति। ततो हेतोरेषान्या विस्तृता व्युत्पत्तिः। ततः संक्षेपाद्वा सकाशात्। अन्येति द्वितीया। सर्वज्ञत्वमेव विस्तीर्णा व्युत्पत्तिरित्यर्थः। उक्तं च—'न स शब्दो न तद्वाच्यं न स न्यायो न सा कला। जायते यन्न काव्याङ्गमहो भारो महान्कवेः॥' अभ्यासो लोकप्रसिद्ध एव ॥

केवलं तस्य स्थाननियमं कर्तुमाह—

**अधिगतसकलज्ञेयः सुकवेः सुजनस्य संनिधौ नियतम्**
**नक्तंदिनमभ्यस्येदभियुक्तः शक्तिमान्काव्यम् ॥20॥**

अधिगतेति। वाक्यार्थः सुगमः। अत्राह—ननु यद्यधिगतसकलज्ञेयः शक्तिमांश्च तत्किं सुजनस्य सुकवेः संनिधानेऽभ्यस्यति। सत्यम्। छन्दोव्याकरणादिविषयलक्षणातिरिक्तमन्यदपि ज्ञेयं जानाति। यन्महाकविलक्ष्येषु दृश्यते। सुजनत्वाच्च निर्मत्सरो भूत्वा सर्वमसौ दर्शयति। तथाहि। छन्दसि पिङ्गलजयदेवाद्यनुक्तान्यपि वृत्तानि सुकविकाव्येषु दृश्यन्ते बहुशः। यथा माघस्य—'कृतसकलजगद्विबोधो विधूतान्धकारोदयः क्षपितकुमुदतारकश्रीर्वियोगं नयन्कामिनः। गुरुतरगुणदर्शनादभ्युपेताल्पदोषः कृती तव वरद करोतु सुप्रातमह्नामयं नायकः॥' तथा भारवेः—'इह दुरधिगमैः किंचिदेवागमैः सततमसुतरं वर्णन्त्यन्तरम्। अमुमतिविपिनं वेद दिग्व्यापिनं पुरुषमिव परं पद्मयोनिः परम्॥' एवमन्येषामपि सन्ति। तथा व्याकरणे वर्वष्टि-अजर्घाः-सस्ति-दर्द्रष्टि-ईट्टे-ईर्त्सति जिह्वायकयिषति-अड्डिडिषतीत्येवमादीनि पदानि न प्रयोज्यानि। काव्यस्य माधुर्यलालित्यविनाशप्रसङ्गात्। तथा क्षपि-मिलि-अर्थि-वचि-क्लीबप्रभृतयो धातवो धातुगणेषु पठिता अपि। सहेश्च परस्मैपदं प्रयोगदर्शनात्प्रयोक्तव्यम्। पदविषयं च यथा पक्ष्मशब्दोऽक्षिरोमस्वभिधानेषु पठितोऽन्यत्रापि दृश्यते। यथा माघस्य—'निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा' इति। एवमन्यदपि कलादिविषये द्रष्टव्यम्। यत्सुजनकविसंनिधानाज्ज्ञेयम्। नियतमित्यनेन सुकविसंनिधान एवाभ्यासः कार्य इति नियम इति। नक्तंदिनमित्यनेन तु यदैव पट्वी बुद्धिः क्षणश्च भवति तदैवाभ्यस्येत्, न पुनर्यथा कैश्चिदुक्तम् 'पश्चाद्रात्रे एव'। इति तु कवेः काव्यकरणेऽत्यन्तादराधानार्थम् ॥

पुनः काव्यस्य प्रयोजनान्तरमाह—

**स्फारस्फुरदुरुमहिमा हिमधवलं सकललोककमनीयम्।**
**कल्पान्तस्थायि यशः प्राप्नोति महाकविः काव्यात् ॥21॥**

स्फार इति। स्फारो दृढः, स्फुरञ्जनमनःसु प्रसरन्, अत एवोरुर्विस्तीर्णो महिमा यस्य कवेः सः। तथा यशः कीदृशम्। हिमधवलमित्यादि सुगमम्॥

ननु काव्यादेवंविधयशोभवने प्रमाणभावद्देवगृहादिकमेव कारयितव्यमित्येतन्निरस्यन्दृष्टान्तपुरःसरं काव्यकरणे यत्नोपदेशमाह–

**अमरसदनादिभ्यो भूता न कीर्तिरनश्वरी**
**भवति यदसौ संवृद्धापि प्रणश्यति तत्क्षये।**
**तदलममलं कर्तुं काव्यं यतेत समाहितो**
**जगति सकले व्यासादीनां विलोक्य परं यशः ॥22॥**

अमर इति। सुगमम्। तस्मात्स्थितमेतत्कवेः काव्यकरणादेव परं यशो भवतीति। उक्तं च–'यतः क्षणध्वंसिनि संभवेऽस्मिन्काव्यादृतेऽन्यत्क्षयमेति सर्वम्। अतो महान्यशसे स्थिराय प्रवर्तितः काव्यकथाप्रसङ्गः'॥

**इति श्रीरुद्रटकृते काव्यालंकारे नमिसाधुविरचितटिप्पणसमेतः**
**प्रथमोऽध्यायः समाप्तः।**

## 12. उपमालङ्कारपरिष्कारः

**अप्पय्यदीक्षितः – चित्रमीमांसा (I.1f )**

(उपमायाः) अस्यास्तावदेवं लक्षणमाहुः–

**उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः।**
**हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः॥**

कविसमयप्रसिद्ध्यनुरोधेनोपमानोपमेयत्वयोग्ययोरेव साधर्म्यमुपमा। नत्वतथाभूतयोः। अत एव 'कुमुदमिव मुखं प्रसन्नम्' इत्यादि नोपमा। तथाभूतयोरपि वस्तुत्वद्रव्यत्वादिकृतमहृद्यं साधर्म्यं न तथा। किंतु हृद्यमेव कान्तिमत्त्वादिकम्। सर्वोऽपि ह्यलंकारः कविसमयप्रसिद्ध्यनुरोधेन हृद्यतया काव्यशोभाकर एवालंकारतां भजते। अतः 'गोसदृशो गवयः' इति नोपमा। 'गौर्वाहीकः' इति न रूपकम्। 'स्थाणुर्वा पुरुषो वा' इति न संदेहः। 'इदं रजतम्' इति न भ्रान्तिमान्। 'नायं सर्पः' इति नापह्नुतिः। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति न पर्यायोक्तम्। 'पर्वतो वह्निमान्' इति नानुमानम्। 'स देवदत्तः' इति न स्मरणम्। 'तस्थस्थमिपां तांतंतामः' इति न यथासंख्यम्। 'पुत्रेण सहागतः पिता' इति न सहोक्तिः। 'तेन विना गतः' इति न विनोक्तिः। 'श्वेतो धावति' इति न श्लेषः। इत्याद्यूहनीयम्। अत्रेदं विचार्यते–द्वयोरिति विशेषणमिह किमर्थम्। स्वस्य स्वेनैव साधर्म्यवर्णनात्मकस्यानन्वयस्य व्युदासार्थमिति चेत्, एवमप्युपमानस्योपमेयत्वकल्पनात्मके प्रतीपे द्वयोः पर्यायेणोपमेयत्वकल्पनात्मिकायामुपमेयोपमायां चातिव्याप्तिः। तयो सादृश्यवर्णनसत्त्वादुपमात्वेन संग्राह्यत्वे तथैवानन्वयोऽपि संग्राह्यः स्यादिति व्यर्थं द्वयोरिति पदम्। एतेन 'साधर्म्यमुपमा भेदे–' इति काव्यप्रकाशिकोक्त (काशोक्त) लक्षणेऽनन्वयव्युदासाय कृतं भेदग्रहणमपि प्रत्युक्तम्। नहि संभवत्साधर्म्यवर्णन एवोपमात्त्वम्। येन स्वस्य स्वेन साधर्म्यासंभवादनन्वयस्य व्यवच्छेद्यत्वमितरयोः संग्राह्यत्वं न स्यात्। तथात्वे 'हंसीव धवला कीर्तिः स्वर्गङ्गामवगाहते' इत्यादौ कविकल्पितसाधर्म्योपमाया अनुपमात्वप्रसङ्गात्। किं च सत्यामप्युपमानोपमेयत्वयोग्यतायां सत्यपि हृद्यत्वे लिङ्गवचन-भेदादिदुष्टायामुपमायां 'हंसीव धवलश्चन्द्रः सरांसीवामलं नभः' इत्यादि

रूपायामतिव्याप्तिः। उदाहरिष्यमाणे चोपमाध्वनावतिव्याप्तिः। न हि सोऽप्यलंकारः। अलंकार्यत्वात् ब्राह्मणश्रमणन्यायेन तत्रालंकारध्वनिव्यपदेश इति सिद्धान्तात्। यदि च दुष्टादुष्टालंकार्यालंकारसाधारणोपमासामान्य-लक्षणमिति नोक्तातिव्याप्तिस्तदोपमानोपमेयत्वयोग्ययोरिति हृद्यमिति च व्यर्थम्। कविसमयप्रसिद्ध्यभावादिदुष्टोपमाया अपि संग्राह्यत्वात्। यत्तु विद्यानाथेन लक्षणमुक्तम्—

**स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः।**
**साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा॥** इति।

अत्र स्वतःसिद्धेनेत्युत्प्रेक्षाव्यावृत्तिः। तत्रोपमानस्य कविकल्पितत्वेन लोकसिद्धत्वाभावात्। भिन्नेनेत्यनन्वयव्यावृत्तिः। संमतेनेति सर्वविधदुष्टोपमाव्यावृत्तिः। कविसमयप्रसिद्ध्यभावेन लिङ्गवचनभेदादिना वा यद्यदसंमतं तस्य सर्वस्यापि संमतपदेन व्यावर्तनात्। धर्मत इति श्लेषव्यावृत्तिः। श्लेषे हि 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव।' इत्यादौ शब्दसाम्यमात्रमिवशब्देनोच्यते न गुणक्रियारूपधर्मसाम्यम्। अन्येन वर्ण्यस्येत्यनेन प्रतीपव्यावृत्तिः। तत्र वर्ण्येन प्रकृतेन सहाप्रकृतस्य सादृश्यवर्णनात्। एकदेत्यनेनोपमेयोपमाव्यावृत्तिः। 'वाच्यमित्यनेन व्यङ्ग्योपमाव्यावृत्तिः' इति। तत्रोत्प्रेक्षाव्यावृत्तये स्वतःसिद्धेनेत्युक्तमयुक्तम्। उत्प्रेक्षायामिवकारस्य विषयविषयिणोस्तादात्म्यादिसंभावनावाचकत्वेन तत्र साम्यस्यावाच्यतया तत एव तद्व्यावृत्तेः। उक्तं हि चक्रवर्तिना—

**यदायमुपनानांशो लोकतः सिद्धिमृच्छति।**
**तदोपमैव येनेवशब्दः साधर्म्यसूचकः॥**
**यदा पुनरयं लोकादसिद्धः कविकल्पितः।**
**तदोत्प्रेक्षैव येनेवशब्दः संभावनापरः॥** इति।

दृष्टं च लोके संभवनापरत्वमिवशब्दस्य। 'दूरे तिष्ठन्देवदत्त इव भाति' इति। कथं च स्वतः सिद्धेनेत्यनेनोत्प्रेक्षाव्यावृत्तिः।

**न नित्यमस्मिन्परिपूर्णतेति त्यक्त्वा नभः क्षोणितलावतीर्णः।**
**आनन्दयन्निन्दुरिव स्वाधाम्ना विभाति लोके नवकाकतीन्द्रः॥**

इति तदीयोत्प्रेक्षोदाहरण एवोपमानस्य स्वतःसिद्धत्वात्। इन्द्रः क्षोणितलावतीर्णत्वाकारेण कविकल्पित इति चेत्तर्हि,

**चन्द्रबिम्बादिव विषं चन्दनादिव चानलः।**
**परुषा वागितो वक्रादित्यसंभावितोपमा॥**

इत्युक्तायामसंभावितोपमायामव्याप्तिः। विषानलयोः स्वतःसिद्धत्वेऽपि चन्द्र-चन्दनप्रभवत्वेन कविकल्पितत्वात्।

**उभौ यदि व्योम्नि पृथक्प्रवाहावकाशगङ्गापयसः पतेताम्।**
**तेनोपमीयते तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥**

इति कविकल्पितोपमानायामुपमायां सर्वथैवाव्याप्तिः.। भिन्नेनेत्यनन्वय-व्यावृत्त्यर्थमुपात्तमप्ययुक्तम्।

**अनन्तरत्नप्रभवस्य यस्म हिमं न सौभाग्यविलोपि जातम्।**
**एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥**

इत्यस्यामुपपादकोपमायामव्याप्तेः। तत्रोपमेयदोषगुणसामान्यन्तर्गतामुपमानां दोषगुणविशेषाणां कलङ्ककिरणानां तद्भिन्नत्वाभावात्। अथोपमेयतावच्छेदकभिन्नोपमानतावच्छेदकावच्छिन्नत्वमुपमानस्य तद्भिन्नत्वमेतदपि न युक्तम्।

**अनवरतकनकवितरणघृतजललवकरतरङ्गितार्थिततेः।**
**भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला॥**

इति रशनोपमायामव्याप्तेः। मतित्वाद्युपमानतावच्छेदकानामुपमेय-तावच्छेदकभिन्नत्वाभावात्। उपमेयोपमायामुपमानतावच्छेदकयोर्द्वयोरपि तद्भिन्नत्वाभावेनोक्तविशेषणेनैव तद्व्यावृत्तिसिद्ध्या एकदेत्यस्य वैयर्थ्यापत्तेश्च।

**रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः।**
**भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥**

इत्युपमेयोपमाप्रकरणोदाहरिष्यमाणपरस्परोपमायामव्याप्तेश्च। अथ स्वोपमेय-तावच्छेदकभिन्नधर्मावच्छिन्नत्वमुपमानस्य तद्भिन्नत्वमि ति विवक्षितमिदमपि न सम्यक्।

**उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्।**
**स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥**

**द्वारं द्वारमटन्भिक्षुः शिक्षत्येवं न याचते।**
**अदत्त्वा मादृशो मा भूर्दत्त्वा त्वं त्वादृशो भव ॥**

इत्याद्यभिन्नधर्मिकोपमास्वव्याप्तेश्च। तत्र परमेश्वरत्वादेः स्वोपमेयतावच्छेदकस्यैवोपमानतावच्छेदकत्वात्। श्लेषव्यावृत्त्यर्थं धर्मत इति विशेषणमप्ययुक्तम्। तत्र न शब्दसाम्यमात्रमिवेनोच्यते किं तु गुणसाम्यमपीति तदव्यावृत्तेः। ननु पुरे सकलकलत्वं कलकलशब्दसाहित्यं सुधांशुबिम्बे कलासाकल्यमिति, नैकोऽनुगतो गुणो लभ्यते। मैवम्। श्लेषाभित्तिकाभेदाध्यवसायमूलया भेदेऽभेद इत्येवंरूपयातिशयोक्त्या धर्मसाधारण्यलाभात्। नह्युपमानोपमेययोरनुगत्या धर्मस्य मुख्यसाधारण्य एवोपमालंकारः।

**पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो नवचन्दनेन।**
**आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥**

इत्यादौ हरिचन्दनबालातपराहरनिर्झरादीनां बिम्बप्रतिबिम्बभावेन निर्दिष्टानामपि साधारणधर्मत्वाङ्गीकारात्। ननु सकलकलमित्यादावपि गुणसाम्यं चेदुपमैव स्यादिति चेत्, शब्दसाम्यमात्रं चेदपि किमित्युपमा न स्यात्। नहि शब्दान्यगुणादिसाम्यमेवोपमाप्रयोजकं न शब्दसाम्यमिति कुलधर्मः।

**यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।**
**तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥**

इत्यत्रानुगतार्थनामारूपशब्दसाम्येऽप्युपमादर्शनात्। किं तु श्लेषस्यालंकारान्तरविविक्तविषयाभावेन निरवकाशतया बलवत्त्वेनालंकारान्तरबाधकत्वादुपमाप्रतिभानेऽपि तत्प्रतिभोत्पत्तिहेतुः श्लेष एव नोपमेति मङ्खकादिभिरभ्युपेयते। ततश्च यथा शब्दसाम्यामाश्रित्योपमाप्रतिभाने तद्बाधकत्वं श्लेषस्य तथा श्लेषभित्तिकाभेदाध्यवसायलब्धाभेदगुणसाम्यमात्रमाश्रित्योपमाप्रतिभानेऽपि

तद्वक्तुं शक्यमिति तदनुरोधेन न तत्र गुणसाम्यपरित्यागः यत्तु रुद्रटेन—सकलकलमित्यादावुपमां समर्थयमानेन,

**स्फुटमर्थालंकारावेतावुपमासमुच्च्यौ किं तु।**
**आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः॥**

इति शब्दसाम्यमात्रमिहोक्तम् तदन्ततः शब्दसाम्यमात्रमाश्रित्याप्युपमा समर्थयितुं शक्येति भावने, न त्वभेदाध्यवसायेनापि गुणसाम्यं न संभवतीति भावेन श्लिष्टविशेषणेष्वंप्यभेदाध्यवसायेनैक्यस्यालंकारान्तरेषु सर्वैरपि समाश्रयणात्। तस्माद्धर्मत इत्यनेन न श्लेषो व्यावर्तयितुं शक्यते। वस्तुतस्तु सकलकलमित्यादावुपमैवेति व्यर्थं धर्मत इति विशेषणम्। अलंकारान्त-विविक्तस्तु श्लेषस्य विषयस्तत्प्रकरणे दर्शयिष्यते। किं च विविक्तविषयाभा-वेनलंकारान्तरबाधकत्वमिति वाचोयुक्तिरप्ययुक्ता। विषयसद्भावमात्रेण निरवकाशत्वहानेर्विविक्तविषयानपेक्षणात्। नह्ययमलंकारगोचरो लोकन्यायो यद्विविक्तविषयो वक्तव्य इति। अरन्ध्ररत्नानां सुवर्णविविक्तविषयाभावेऽपि सुवर्णाश्रितानामेव चारुताहेतुत्वेनालंकारान्तरत्वव्यवस्थितेः। अप्यथा नि-रवकाशैररन्ध्रप्रत्युप्तरत्नैः सावकाशस्य तदाश्रयसुवर्णस्यालंकारता बाध्येत। नाप्ययं वाक्यवित्संमतः शास्त्रीयन्यायः पदे जुहोतीत्यादीनामिवोत्तरार्धे जुहोतीत्यादीनामाहवनीयशास्त्रादिविविक्तविषयाभावेऽपि सविषयत्वमात्रेण प्रतिष्ठितत्वात्। नाप्यसाधारण्येनैतच्छास्त्रन्यायः। सहोक्त्यादीनामतिश-योक्त्यादिविविक्तविषयाभावेऽपि तदबाधेनालंकारान्तरत्वव्यवहारादविरोध इहाप्यविशिष्टः। तस्मादत्रोपमाप्रतिभोत्पत्तिहेतुः श्लेषालंकार इत्ययुक्तम्। पुत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः। नहि पुरवर्णनप्रकरणे सकलकलमिति तद्विशेषणपदस्य सुधांशुबिम्बमिवेत्युपमाया अनिबन्धने कलासाकल्य-लक्षणार्थान्तरप्रतिभा संभवति। प्रतीपव्यावृत्त्यर्थमन्येन वर्ण्यस्य साम्यमित्युक्तं तत्रान्येनेत्ययुक्तम्। अनेनेत्यस्य भिन्नविशेषणेन पौनरुक्त्यात्। किं च वर्ण्यात्प्रकृतादन्येनाप्रकृतेनेति यद्यर्थस्तदा

**इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु।**
**रजांसि समरोत्थानि तच्छोणितनदीष्विव॥**

इति समुच्चितोपमायामव्यप्तिः। तत्र समराङ्गत्वेन रजसां शोणितेषु पतनस्यापि वर्ण्यत्वात्। यदि तु स्वयं वर्ण्येनावर्ण्येन वा कुतश्चिद्वर्ण्यादन्येनेत्यर्थः। तदाप्युत्कृष्टगुणत्वादुपमानभावमप्यसहमानस्योपमानत्वकल्पनरूपे प्रतीतेऽतिव्याप्तिः। यथा–

**अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः।**
**ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम्॥**

अत्र हि वर्ण्यानां दुर्जनवचसां हालाहलेनातिप्रकृष्टदोषत्वादुपमानभावमप्यसहमानेन साम्यनिबन्धनं प्रतीपम्। अत्र वर्ण्यस्येत्यप्ययुक्तम्। 'त्वत्कीर्तेः पुरतो भाति ज्योत्स्ना ध्वान्तमलीमसा' इत्यप्रस्तुतप्रशंसासंकीर्णोपमायामव्याप्तेः। तत्र कीर्तेरेव वर्ण्यत्वेन ज्योत्स्नाया अवर्ण्यत्वात्। अपि च 'अन्येन वर्ण्यस्य साम्यं वाच्यम्,' इति कोऽर्थः। किमन्यप्रतियोगिकत्वेन वर्ण्यगतं साम्यं वाच्यमिति, किं वा यथाकथंचिद्वर्ण्यावर्ण्योभयनिरुपितं साम्यं वाच्यम्। अथवा वर्ण्यानुपयोगिकत्वेन साम्यं वाच्यमिति। आद्ये 'सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते' इत्युभयविश्रान्तसादृश्योपमायामव्याप्तिः। द्वितीये प्रसिद्धप्रतीपेऽप्यतिव्याप्तिस्तदवस्था। एवं तृतीये वर्ण्यस्य साम्यमित्येतावता विवक्षितार्थलाभादन्येनेत्यस्य वैयर्थ्यम्। उपमेयोपमाव्यावृत्त्यर्थमेकदेति विशेषणमप्ययुक्तम्। तेन 'खमिव जलं जलमिव खं' इत्यादौ पर्यायेण प्रवृत्तायामुपमेयोपमायामतिव्याप्तिनिरासेऽपि

**तद्वल्गुना युगपदुन्मिषितेन ताव-**
**त्सद्यः परस्परतुलामधिरोहतां द्वे।**
**प्रस्पन्दमानपरुषेतरतारमन्त-**
**श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम्॥**

इति युगपत्प्रवृत्तायां तस्यामतिव्याप्तयनिरासात्। अपि चैवम्,

**ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।**
**प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी॥**

इति भिन्नसाधारणधर्मायां मालोपमायामव्याप्तिः। तत्रानेकदा साम्यप्रतिपादनात्। न च बहूपमामेलनमेव मालोपमा नैका, तासु च प्रत्येकं लक्षणमस्त्येवेति वाच्यम्। तथा सत्युपमेयोपमाप्युपमाप्रतीपमेलनमेवेति तद्व्यावृत्त्यर्थं विशेषणान्तरकरणायोगात्। संसृष्टिसंकरात्पृथग्ग्रन्थकृतां लेखनमुभयत्रापि तुल्यम्। एवमुपमेयोपमाप्रकरणे उदाहरिष्यमाणायां 'रजोभिः स्यन्दनोद्धूतैः' इति परस्परोपमायामव्याप्तिः। व्यङ्ग्योपमाव्यावृत्त्यर्थं वाच्यमित्युक्तमप्ययुक्तम्।

**न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे।**
**इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा॥**

इत्युक्तरूपायां तत्त्वाख्यानोपमायां साम्यस्यावाच्यत्वेनाव्याप्त्यापत्तेः।

**त्वदाननमधीराक्षमाविर्दशनदीधिति।**
**भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम्॥**

इत्यादौ विशिष्टोपमाद्याक्षिप्तविशेषणाद्युपमायामव्याप्त्यापत्तेश्च। 'शस्त्री श्यामा' इत्यादिवाचकलुप्तोपमायां 'चन्द्रसुहृन्मुखम्' इत्यादिसाम्य-लक्षकपदवदुपमायां चाव्याप्तपत्तेश्च। किं च वाच्यमित्यत्र विधेयतया वाच्यतोच्यते अनुवाद्यतया वा। आद्ये

**स कर्षन्महतीं सेनां पूर्वसागरगामिनीम्।**
**बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः॥**

इत्यादावेवेदं लक्षणं स्यात्।

**स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा।**
**अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः॥**

इत्यादौ न स्यात्। द्वितीये यत्र व्यतिरेकालंकारे साम्यस्य निषेधायानुवाद्यता 'मुखेन निष्कलङ्केन न समस्तव चन्द्रमाः' इत्यादौ, तत्रपीदं लक्षणं स्यात्। न च निषेधाप्रतियोगित्वेन वाच्यमिति विशेषणीयम्।

**असिमात्रसहायोऽपि प्रभूतारिपराभवे।**
**नैवान्यतुच्छजनवत्सगर्वोऽयं महाद्युतिः॥**

इति व्यतिरेके तथाप्यतिव्याप्तेः। न च निषेधप्रतियोगिकोट्यननुप्रविष्टतया वाच्यमिति विशेषणीयम्।

**वृथा चरसि किं भृङ्ग तत्र तत्र वनान्तरे।**
**मालत्याः सदृशीं क्वापि भ्रमन्नपि न लप्स्यसे॥**

इत्युपमानलुप्तायामव्याप्तेः। तत्र सदृशलाभनिषेधे साम्यस्यापि प्रतियोगिकोटिनिविष्टत्वात्। तस्माद्विद्यानाथोक्तलक्षणमप्ययुक्तम्।

यत्तु सरस्वतीकण्ठाभरणोक्तं लक्षणम्—

**प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः।**
**भूयोऽवयवसामान्ययोगः सेहोपमा मता॥**

इति। तदपि गुणक्रियादीनां परस्परसादृश्यवर्णनात्मिकायाम्—

**ससञ्जुरश्व क्षुण्णानामेलानामुत्पतिष्णवः।**
**तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः॥**

इत्याद्युपमायामव्याप्तम्।

**उद्गर्भहूणतरुणीरमणोपमर्द-**
**भग्नोन्नतस्तननिवेशनिभं हिमांशोः।**
**बिम्बं कठोरबिसकाण्डकडारमेत-**
**द्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति॥**

'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्' इत्यादौ प्रसिद्धिरहितोपमानायां कल्पितोपमायां चाव्याप्तम्।

यत्त्वलंकारसर्वस्वकृतोक्तम्—"उपामानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वेवोपमा। साधर्म्ये त्रयः प्रकाराः। भेदप्राधान्यं दीपकतुल्ययोगितादृष्टान्तप्रतिवस्तूपमासहोक्तिव्यतिरेकादिषु। अभेदप्राधान्यं रूपकपरिणामभ्रान्तिमदुल्लेखादिषु। द्वयोस्तुल्यत्वं यथा स्यामुपमायाम्। अत्र ह्युपमा-

नोपमेयसाधारणरूपाभ्यां भेदः साधारणधर्मेणाभेदश्चेति द्वयोरपि तुल्यतैव'' इति तदप्युपमानोपमेयातिव्याप्त्यादिदुष्टमिति स्पष्टमेव। तस्माद्दुर्वचमस्या लक्षणमिति। अत्रोच्यते—

**व्यापार उपमानाख्यो भवेद्यदि विवक्षितः।**
**क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा ॥**

उपमानव्यापार उपमितिक्रियानिष्पादको व्यापारः सादृश्यवर्णना। सोऽयमुपमितिक्रियानिष्पत्तिपर्यन्तं विविक्षता चेदुपमालंकार इत्यर्थः। तथा च व्यतिरेके नातिव्याप्तिः। तत्र सादश्यवर्णनासत्त्वेऽपि 'मुखेन निष्कलङ्केन' इत्यादौ साक्षात्तस्यैव निषेधेन, 'नैवान्यतुच्छजनवत्' इत्यादौ तत्प्रयोजकधर्मनिषेधेन चोपमितिक्रियाया अनिष्पत्तेः। नाप्यनन्वयेऽतिव्याप्तिः। तत्रापि स्वेन स्वस्य सादृश्यस्य सदृशान्तरव्यवच्छेदे रुद्ररोदनवपोत्खननाद्यर्थवादेऽसदर्थस्य निन्दास्तुत्योरिव द्वारमात्रतया वर्ण्यमानत्वेनोपमितिक्रियाया अनिष्पत्तेः। अन्यथा स्वस्य स्वेनोपमितिक्रियानिष्पत्तौ सदृशान्तरव्यवच्छेदेऽपि सर्वथानुपमत्वद्योतनं फलं न स्यात्। आहुश्च तस्य तदेव फलं भामहादयः—

**यत्र तेनैव तस्य स्यादुपमानोपयेयता।**
**असादृश्यविवक्षातो वदन्ति तमनन्वयम् ॥**

अत एव वर्ण्यमानमपि स्वस्य स्वस्मिन्साधर्म्य नान्वेतीत्यनन्वय-पदव्युत्पत्तिमलंकारसर्वस्वकारादयो वदन्ति। ततश्च यथाम्भसि कतकरजःसंयोजनेन रजोन्तरव्यवच्छेदे सति कतकरजसोऽपि विलयनात्सर्वथानाविलमम्भः सिध्यति तथा 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादौ स्वेन सादृश्यवर्णनया सदृशान्तरव्यवच्छेदे सति वस्तुतः स्वेनाप्युपमाया असंभवादनुपमं रामरावणयोर्युद्धमित्यत्रैव कविसंरभ इत्युपमितिक्रियाया अनिष्पत्तेर्नानन्वयेऽतिव्याप्तिशङ्कावकाशः। एवं प्रतीपेऽपि यत्रोपमित्यनिष्पत्तिः,

**आकर्णय सरोजाक्षि वचनीयमिदं भुवि।**
**शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते ॥**

इत्यादौ न तत्रातिव्याप्तिशङ्का। उपमितिक्रियानिष्पत्तिविरहात्।

**गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे।**
**सन्तीदृशनि दिशि दिशि सरःसु ननु नीलनलिनानि ॥**

इत्यादि प्रतीपमुपमेयोपमा चेत्युभयमपि संग्राह्यमेवेति न तद्व्यापनं लक्षणस्य दोषः। तथा ह्युदाहृतं प्रतीपं तावदुपमाविशेष एव। सादृश्यवर्णनस्य प्रकृतविषयत्व इवाप्रकृतविषयत्वेऽपि स्मृतिरूपकसंदेहभ्रान्त्यनेकधा-ग्रहणापह्नवसंभावनासंभवद्वस्तुसंबन्धनिबन्धननिर्दिष्टसमर्थनादीनामिवा-लंकारान्तरत्वायोगात्। अन्यथा तेषामपि प्रकृतिविषयत्व एव स्मरणरूपक-संदेहभ्रान्तिमदुल्लेखापह्नुत्युत्प्रेक्षानिदर्शनार्थान्तरन्यासाद्यलंकारत्वम। अप्रकृतविषयत्वेऽपि चानलंकारत्वमिति कल्पनाप्रसङ्गात्। स्मृत्यादयश्च प्रकृतविषया इवाप्रकृतविषया अप्यलंकारभूतास्तत्र तत्रोदाहरिष्यन्ते। न चोपमायामयं नियमो यदप्रकृतेन प्रकृतसादृश्यवर्णनात्मनैव तया भाव्यमिति। समुच्चयोपमाद्युदाहरणेषु प्रकृतयोरेवाप्रकृतयोरेव वा सादृश्यवर्णन-स्याप्युपमात्वाङ्गीकारात्। तद्वत्प्रकृतेनाप्रकृतस्य सादृश्यवर्णनमप्युपमैवेति युक्तम्। एवं चोपमेयोपमापि प्रकृताप्रकृतविषयोपमाद्वयरूपतया नालंकार-न्तरतां भजते। अन्यथा तत्प्रकरणोदाहरिष्यमाणपरस्परोपमाया अप्यलंकारा-न्तरत्वप्रसङ्गात्। परस्परभ्रमनिबन्धनादिष्वप्यलंकारान्तरतापत्तेश्च। न चानन्वयप्रतीपोपमेयोपमासु सादृश्यवर्णनस्य पृथग् निरूपणस्य चाविशिष्ट-त्वेनानन्वयस्यानुपमात्वमितरयोरुपमात्वं च वक्तुमयुक्तमिति वाच्यम्। यत्रोप-मितिक्रियानिष्पत्तिस्तत्रोपमाशब्दप्रवृत्तिनिमित्तसद्भावेन, यत्र तदनिष्पत्तिस्तत्र तदभावेन च वैषम्यस्य स्फुटत्वात्। इममेव विशेषमभिप्रेत्य काव्यप्रकाशिका-दिलक्षणेष्वनन्वयव्युदासार्थमेव यत्नः कृतो नोपमेयोपमादिव्युदासार्थम्। उपमेयोपमादेरुपमान्तर्गतत्वेऽपि व्यङ्ग्यादिकृतवैचित्र्यविशेषेण पृथग्गणनं न विरुध्यते। रूपकपरिणामवत्। 'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यादौ लक्षणाभावो न दोषः। यदि तथा भूतौ प्रवाहौ स्यातां तर्ह्युपमीयेत। न च तौ संभवतः। तस्मान्न केनाप्युपमीयत इत्युपमापरपर्यायोऽयमित्यनिष्प-त्तावप्युपमात्वस्वीकारे तत्रोपमाशब्दस्य पारिभाषिकत्वापत्तेः। किंतु

तत्रातिशयोक्तिविशेषोऽलंकारः। अत एव काव्यप्रकाशिकायां 'प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्' इत्यतिशयोक्तिषु परिगणय्य यद्यर्थोक्तौ कल्पनस्य

**राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।**
**तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥**

इत्युदाहृतम्।

**पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।**
**ततोऽनुकुर्याद्विशदस्य तस्य ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥**

इति तु कविकल्पितोपमानाया उत्पाद्योपमेति व्यवहृताया उदाहरणम्। तत्र यद्युत्पाद्यस्योपनमानस्य संभावितया तेनोपमितिनिष्पत्तेर्लक्षणमस्त्येवेति नाव्याप्तिः। न चैवं 'चन्द्रबिम्बादिव विषं' इत्यसंभावितोपमायामव्याप्तिः। तत्रासंभावितेनैवोपमानेनोपमितिक्रियानिष्पत्तेः। कविना विवक्षितत्वेन विवक्षानुसार्युपमितिक्रियानिष्पत्तिसद्भावात्। नहि 'वस्तुसदर्थानिबन्धनोपमितिक्रियानिष्पत्तिरुपमा' इति लक्षणमुच्यते किं तु कविविवक्षानिबन्धना। अत एव श्लोके विवक्षित इति विशेषणमर्थवत्। अन्यथा 'चन्द्र इव मुखम्' इत्यादावपि लक्षणं न स्यात्। चन्द्रगतकान्त्यतिशयस्य वस्तुतो मुखेऽभावेन विवक्षानुसरणं विना गत्यभावात्। 'चन्द्रधवला कीर्तिः' इत्यादौ च सर्वथैव लक्षणं न स्यात्। कीर्तौ धावल्यस्य लेशतोऽप्यभावात्। न चैवमनन्वयेऽपि कविविवक्षया स्वस्य स्वेनोपमितिक्रियानिष्पत्तिः संभवतीति वाच्यम्। सर्वथैवानुपमत्वद्योतने कविसंरम्भे सति तथा विवक्षानुदयात्। 'वृथा चरसि किं भृङ्ग' इत्यादौ सादृश्याधिकरणस्यानुपलम्भोक्त्योपलभ्यमानेषु सादृश्यनिषेधपर्यवसानेऽप्यनुपलभ्यमानगतसादृश्याभ्यनुज्ञानात्तत्रोपमितिक्रियानिष्पत्तिरस्तीति नाव्याप्तिः। अत एव तस्य विशिष्यानुपादानादुपमानलुप्तता। एवम्—

**निरूप्यमाणं कविना सादृश्यं स्वात्मनो न चेत्।**
**प्रतिषेधमुपादाया पर्यवस्यति सोपमा ॥**

इत्यपि लक्षणमनुसंधेयम्।



यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावतासावलोकसामान्यमहानुभावचित्तवृत्तिविशेषवत्प्रतिक्षेप्तुं शक्यः। वीरेन न च तस्यान्तर्भावः कर्तुं युक्तः। तस्याभिमानमयत्वेन व्यवस्थापनात्। अस्य चाहंकारप्रशमैकरूपतया स्थितेः। तयोश्चैवंविधविशेषसद्भावेऽपि यद्यैक्यं

---

विरुद्धो यो वैराग्यशमपोषको नागीयकलेवरास्थिजालावलोकनादिवृत्तान्तः स मित्रावसोः प्रविष्टस्य मलयवतीनिर्गमनकारिणः 'संसर्पद्भिः समन्तात्—' इत्यादि काव्य उपनिबद्धः क्रोधव्यभिचार्युपकृतवीररसान्तरितो निवेशितः। ननु नास्त्येव शान्तो रसः। तस्य तु स्थाय्येव नोपदिष्टो मुनिनेत्याशङ्क्याह—**शान्तश्चेति**। तृष्णानां विषयाणां यः क्षयः सर्वतो निवृत्तिरूपो निरोधस्तदेव सुखं तस्य यः स्थायीभूतस्य परिपोषो रस्यमानताकृतस्तदेव लक्षणं यस्य स शान्तो रसः। **प्रतीयत एवेति**। स्वानुभवेनापि निवृत्तभोजनाद्यशेषविषयेच्छाप्रसरत्वकाले संभाव्यत एव। अन्ये तु सर्वचित्तवृत्तिप्रशम एवास्य स्थायीति मन्यन्ते। तृष्णासद्भावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात्। पर्युदासे त्वस्मत्पक्ष एवायम्। अन्ये तु 'स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः। पुनर्निमित्तापाये तु शान्त एव प्रलीयते॥' इति भरतवाक्यं दृष्टवन्तः सर्वरससामान्यस्वभावं शान्तमाचक्षाणा अनुपजातविशेषान्तरं चित्तवृत्तिरूपं शान्तस्य स्थायिभावं मन्यन्ते। एतच्च नातीवास्मत्पक्षाद्दूरम्। प्रागभावप्रध्वंसाभावकृतस्तु विशेषः। युक्तश्च प्रध्वंस एव तृष्णानाम्। यथोक्तम्— 'वीतरागजन्मादर्शनात्' इति। प्रतीयत एवेति मुनिनाप्यङ्गीक्रियत एव 'क्वचिच्छमः' इत्यादि वदता। न च तदीयापर्यन्तावस्था वर्णनीया येन सर्वचेष्टोपरमादनुभवाभावेनाप्रतीयमानता स्यात्। 'शृङ्गारादेरपि फलभूमाववर्णनीयतैव पूर्वभूमौ तु प्रशान्तवाहिता,' संस्कृतान्तश्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः' इति सूत्रद्वयनीत्या चित्राकारामयनियमादिचेष्टा वा राज्यधरोद्वहनादिलक्षणा वा शान्तस्यापि जनकादेर्दुष्टैवेत्यनुभवसद्भावाद्यमनियमादिमध्यासंभाव्यमानभूयोव्यभिचारिसद्भावाच्च प्रतीयत एव। ननु न प्रतीयते। नास्य विभावादयः सन्तीति चेत्, न। प्रतीयत एव तावदसौ। तस्य च भवितव्यमेव प्राक्तनकुशलपरिपाकपरमेश्वरानुग्रहादध्यात्मरहस्यशास्त्रवीतरागपरिशीलनादिभिर्विभावैरितीयतैव व्यभिचारिसद्भावः स्थायी च दर्शितः। ननु तत्र हृदयसंवादाभावाद्रस्यमानतैव नोपपन्ना। क एवमाह नास्तीति। यतः प्रतीयत एवेत्युक्तम्। ननु प्रतीयते सर्वस्य श्लाघास्पदं न भवति। तर्हि वीतरागाणां शृङ्गारो न श्लाघ्य इति सोऽपि रसत्वाच्च्यवतामिति तदाह— **यदि नामेति**। ननु धर्मप्रधानोऽसौ वीर एवेति संभावयमान आह—**वीरे चेति**। तस्येति वीरस्य। **अभिमानमयत्वेनेति**। उत्साहो ह्यहमेवंविध इत्येवं प्राण इत्यर्थः। अस्य चेति शान्तस्य। **तयोश्चेति**। उत्साहमयत्वनिरीहत्वेनात्यन्तविरुद्धयोरपीति च शब्दार्थः। वीररौद्रयोस्त्वत्यन्तविरोधोऽपि नास्ति। समानरूपं च धर्मार्थोपयोगित्वम्। नन्वेवं दयावीरो धर्मवीरो

परिकल्प्यते तद्वीररौद्रयोरपि तथा प्रसङ्गः। दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहंकाररहितत्वेन शान्तरसप्रभेदत्वम्, इतरथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः। तदेवमस्ति शान्तो रसः। तस्य चाविरूद्धरसव्यवधानेन प्रबन्धे विरोधिरससमावेशे सत्यपि निर्विरोधत्वम्। यथा प्रदर्शिते विषये। एतदेव स्थिरकर्तुमिदमुच्यते–

**रसान्तरान्तरितयोरेकवाक्यस्थयोरपि।**
**निवर्तते हि रसयोः समावेशे विरोधिता ॥27॥**

रसान्तरव्यवहितयोरेकप्रबन्धस्थयोर्विरुद्धयोर्विरोधिता निवर्तत इत्यत्र न काचिद्भ्रान्तिः। यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्तते। यथा–

*भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः।*
*गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः॥*

*सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।*
*संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः॥*

*विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।*
*निर्दिश्यमानांल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन्॥*

---

दानवीरो वा नासौ कश्चित्। शन्तस्यैवेदं नामान्तरकरणम्। तथा च मुनिः–'दानवीरं धर्मवीरं युद्धवीरं तथैव च। दयावीरमपि आह ब्रह्मा त्रिविधसंमतम्॥'

इत्यागमपुरःसरं त्रैविध्यमेवाभ्यधात्। तदाह–**दयावीरादीनामिति**। आदिग्रहणेन विषयजुगुप्सारूपत्वाद्बीभत्सेऽन्तर्भावः शक्यते। सा त्वस्य व्यभिचारिणी भवति न तु स्थायितामेति। पर्यन्तनिर्वाहे तस्या मूलत एव विच्छेदात्। आधिकारिकत्वेन तु शान्तो रसो निबद्धव्य इति चन्द्रिकाकारः। तच्चेहास्माभिर्न पर्यालोचितम्। प्रसङ्गान्तरात्। मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठितत्वात्सर्वरसेभ्यः प्रधानतमः। स चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके, अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयः पूर्वपक्षसिद्धान्त इत्यलं बहुना।



## 16. शृङ्गारैकरसवादः

### भोजः – शृङ्गारप्रकाशः (I. 1-12)

अच्छिन्नमेखलमलब्धदृढोपगूढ मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति।
कान्ताविमिश्रवपुषः कृतविप्रलम्भसंभोगसख्यमिव पातु वपुः पुरारेः ॥1॥
यत्पादपङ्कजरजःपरिमार्जितेषु-चेतस्सु दर्पणतलामलतां गतेषु।
शब्दार्थसंपद उदारतराः स्फुरन्ति विघ्नच्छिदेऽस्तु भगवान्स गणाधिनाथः ॥2॥
आत्मस्थितं गुणविशेषमहंकृतस्य शृङ्गारमाहुरिह जीवितमात्मयोनेः।
तस्यात्मशक्तिरसनीयतया रसत्वं युक्तस्य येन रसिकोऽयमिति प्रवादः ॥3॥
सत्त्वात्मनाममलधर्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः।
सर्वात्मसंप्दुदयातिशयैकहेतु र्जागर्ति कोऽपि हृदि मानमयो विकारः ॥4॥
तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसंपदि वल्लभस्य।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवतो जनस्य ॥5॥
शृङ्गारवीरकरुणाद्भुतरौद्रहास्य बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसान्सुधियो वयं तु शृङ्गारमेव रसनाद्रसमामनामः ॥6॥
वीराद्भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि वटयक्षवदाविभाति।
लोके गतानुगतिकत्ववशादुपेतामेतां निवर्तयितुमेष परिश्रमो नः ॥7॥
अप्रातिकूलिकतया मनसो मुदादेर्यः संविदोऽनुभवहेतुरिहाभिमानः।
ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्ते रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥8॥
रत्यादयोऽर्धशतमेकविवर्जितानि भावाः पृथग्विविधभावभुवो भवन्ति।
शृङ्गारतत्त्वमभितः परिवारयन्तः सप्तार्चिषं द्युतिचया इव वर्धयन्ति ॥9॥
आभावनोदयमनन्यधिया जनेन यो भाव्यते मनसि भावनया स भावः।
यो भावनापथमतीत्य विवर्तमानः साहंकृतौ हृदि परं स्वदते रसोऽसौ ॥10॥

**रत्यादयो यदि रसाः स्युरतिप्रकर्षे हर्षादिभिः किमपराद्धमतद्विभिन्नैः।**
**अस्थायिनस्त इति चेद्भयहासशोकक्रोधादयो वद कियच्चिरमुल्लसन्ति ॥11॥**

**स्थायित्वमत्र विषयातिशयान्मतं चेच्चिन्तादयः कुत उत प्रकृतेर्वशेन।**
**तुल्यैव साऽऽत्मनि भवेदथ वासनायाः संदीपनात्तदुभयत्र समानमेव ॥12॥**

अतः सिद्धमेतत्—रत्यादयः शृङ्गारप्रभवा एव एकोनपञ्चाशद्भावाः; वीरादयो मिथ्यारसप्रवादाः; शृङ्गार एवैकश्चतुर्वर्गैककारणं रस इति। स चानुभवैकगम्यत्वादसर्वविषयत्वाच्च दुरवसेयः, सम्यगभिनयेषु वा विदग्धशैलूषैः प्रदर्श्यमानः सामाजिकैरवधार्यते, प्रबन्धेषु वा महाकविभिर्यथावदाख्यायमानो विदुषां मनीषाविषयमवतरति। तत्र न तथा पदार्थाः प्रत्यक्षेण प्रतीयमानाः स्वदन्ते, यथा वाग्मिनां वचोभिरावेद्यमानाः तदाह—

*'अत्थविसेसा ण हि तह चित्तविआसं कुणान्ति सच्चविआ।*
*जह उण ते उम्मिव्ठव्ठन्ति सुकइवआहिं सुसीसन्ता ॥*

अतोऽभिनेतृभ्यः कवीनेव बहुमन्यामहे, अभिनयेभ्यश्च काव्यमेवेति। तत्पुनः शब्दार्थयोः साहित्यमामनन्ति ; तद्यथा 'शब्दार्थौ सहितौ काव्यम्' इति। कः पुनः शब्दः ? येनोच्चरितेनार्थः प्रतीयते। स च द्वादशधा—प्रकृतिः, प्रत्ययः, उपस्कारः, उपपदम्, प्रातिपदिकम्, विभक्तिः, उपसर्जनम्, समासः पदम्, वाक्यम्, प्रकरणम्, प्रबन्ध इति। कोऽर्थः ? यः शब्देन प्रत्याय्यते। स च द्वादशधा—क्रिया, कालः, कारकम्, पुरुषः, उपाधिः, प्रधानम्, उपस्कारार्थः प्रातिपदिकार्थः, विभक्त्यर्थः, वृत्त्यर्थः, पदार्थः, वाक्यार्थः, इति। किं साहित्यम्? यः शब्दार्थयोः संबन्धः। स च द्वादशधा—अभिधा, विवक्षा, तात्पर्यम्, प्रविभागः, व्यपेक्षा, सामर्थ्यम्, अन्वयः, एकार्थीभावः, दोषहानम्, गुणोपादानम्, अलङ्कारयोगः, रसावियोगः इति।

## 17. वक्रोक्तिः – प्रबन्धवक्रता

### कुन्तकः वक्रोक्तिजीवितम् (IV. 3-8)

**इतिवृत्तप्रयुक्तेऽपि कथावैचित्र्यवर्त्मनि।**
**उत्पाद्यलवलावण्यादन्या लसति वक्रता ॥3॥**

**तथा यथा, प्रबन्धस्य· सकलस्यापि जीवितम्।**
**भाति प्रकरणं काष्ठाधिरूढरसनिर्भरम् ॥4॥**

इतिवृत्तेति।–"तथा उत्पाद्यलवलावण्यादन्या भवति वक्रता" = तेन प्रकारेण कृत्रिमसंविधानकामनीयकादलौकिकी वक्रभावभङ्गी समुज्जृम्भते सहृदयानावर्जयतीति यावत्। (कस्मिन्–) "कथावैचित्र्यवर्त्मनि" –काव्यस्य कथाविचित्रभावमार्गे। किंविशिष्टे "इतिवृत्तप्रयुक्तेऽपि" –इतिहास-परिग्रहेऽपि। तथेति यथाप्रयोगमपेक्षत अत आह– "यथा प्रबन्धस्य सकस्यापि जीवितम्। भाति प्रकरणं" येन प्रकारेण सर्गबन्धादेः समग्रस्यापि प्राणप्रदं भासतेऽङ्गम्। कीदृग्भूतं – काष्ठाधिरूढरसनिर्भर(म्) = प्रथमधारोद्भासितशृङ्गारादिपरिपूर्णम्।

तदयमत्र परमार्थः = विख्यातविचित्ररुचिकथाकरण्डकायमा(ने) महाभारतादौ रससमुद्रमुद्रितायामपि कथायां कस्यचिदुत्तराधर विच्छित्तिकारण-विकल्पकाभावत् सवि(शेष) रसभावजनकाश्चर्यजननकार्यजातानि अतिबन्धुरनिजप्रतिभासमुन्मीलितसमुचितनिरुपमाननिमित्तानि निबन्धनीयानीति। तदतिशयवक्रताप्रकारेण प्रकरणेन व्यवहरन् कविः सकलकविरसिकपरिषत्परितोषणमावहति।

प्रबन्धेऽपि प्रवरनवसंस्कारकारणरमणीयकान्तिपरिपोषः रेखा-राजमानपुरातनत्रुटितचित्रदशास्पदसौभाग्यमनुभवति।

अभिज्ञानशाकुन्तले नाटके इतरतरुणीतिरस्कारकारणाविरोधकत्वे-नेक्षणक्षणाकलितललितलावण्यलक्ष्मीललामनिरुपमरूपरेखा सुखप्रत्यभिज्ञा समुज्जृम्भते। विस्रम्भसंभावनासनाथकथारहस्यरम्यपरस्परानुरूपप्रेमप्रकर्ष-प्रवर्तितचिरतरविचित्रविहरणव्यापारसुप्राप्तप्रत्यभिज्ञां तां शकुन्तलां प्रति

दुष्यन्तस्य विस्मरणकारणमितिवृत्तागदितमपि अल्पमात्रापराधप्रवर्तमानक्रूरक्रुधः करुणापराङ्मुखस्यमुनेर्दुर्वाससः शापमुत्पादितवान् कविः। तत्र हि प्रकरणप्रकाण्डे शकुन्तला किल प्रथमप्रियप्रवासवासरवितीर्णविरहदुःसहदुःखावेशविवशान्तःकरणवृत्तिरुटज (संनिहिता) पर्याकुलेन प्राङ्गणप्रान्ते स्थिते(न) महर्षिणा मन्युसङ्गात्—

*विचिन्तयन्ती यमनन्यमाना सा*
*तपोनिधिं वेत्सि न मामुपस्थितम्।*
*स्मरिष्यति त्वां स न बोधितोऽपि सन्*
*कथां प्रमत्तः प्रथमं कृतामिव ॥8॥*

इत्थं शप्ता। तच्छ्रवणपर्याकुलाभ्यां सखीभ्यां (अनुनीतः) प्रवास्यमानोऽपि मुनिप्रवरः प्रियतमन्यासाङ्गुलीयकविलोकनं (शापा) वसाना (वधि) मकार्षीत्। प्रियं प्रति यान्त्याश्च मुनिदुहितुरलंकृताङ्गलीकिसलयस्याङ्गुलीयकस्य कुत्रचित् कुटिलतरतरङ्गिणीपयोवतारादन्तर्जलमलक्षितं परिभ्रष्टस्य ससंभ्रममदभ्रमरीचिमण्डलमाणिक्यसमुल्लसितसरसामिष विशंकाकुलशकलीकवलितस्य कालान्तरे तदन्तकारिणा कैवर्तनेन पुनरपि (समर्पणम्)। एवंविधस्य संविधानकस्य रसनिधानकलशायमानस्य माहात्म्यादखिलस्यापि नाटकस्य कापि (विच्छित्तिः) समये चञ्चरीकोपालम्भगर्भगीत्यवगमनात् मुनिशापापसारितप्रेयसीस्मृतेरपि तदधिवासवासनापि च परिस्फुरन्ती पौरवस्य पारवश्यं निश्चयामास। तथा च

*रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्*
*पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।*
*तच्चेतसा स्मरति नूनमबोधपूर्वं*
*भावस्थिराणि जननान्तरसौहृदानि ॥9॥*

अत्र संमुग्धसुभगमेनकानन्दिनीस्मरणलेखालावण्यमन्यदेव चमत्कारकारणं सहृदयानां समुद्योतते। अपरं च परावर्तितायामपि व्यलीकमभिज्ञकं च, महर्षिशिष्यसमाख्यातकरग्रहणगर्भाधानायं महामन्युसमुन्मेषः। मनागुल्लङ्घितसहजलज्जावतारतापसशीघ्रापनीतावगुण्ठनेन (पराङ्गनारचित) तथाविधसकलललनालावण्यावलेपसंपदि संपादितविपञ्चीटङ्कारवल्गुवाग्विला-

सव्याहतवनविहरणरहस्याभिज्ञायां भरतमातरि तथारूपं प्रत्याख्यानपारुष्यमपि राज्ञः शापस्य संपत्स्यमानानुतापं परस्परं प्रकाशीभवदनर्गलानुरागप्राग्भारसङ्गादतीव सहृदयाह्लादकारि। शापावसानसमुत्पत्तये प्रसिद्धस्मरणमुल्लासिदुःसहविरहज्वरपातावेगविकलत्वं च समनन्तरमेवाङ्गुलीयसङ्गमादतीव सहृदयानाह्लादयति। नरपतेस्तत्र कञ्चुकिनो वचनम्–

*प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं*
*बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।*
*चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः*
*संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥10॥*

*रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते*
*शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।*
*दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा*
*गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥11॥*

अत्र राज्ञो विशेषणवक्रता, गोत्रेष्विति वचनवक्रत्वं च किमपि चित्तचमत्कारकारि। राज्ञोऽपि स्वयंलिखितालेख्यालोकमानविलोचनस्य स्मरणात्मकं दयितात्ममुद्रामुद्रितं सहृदयवचनम्।

*अक्लिष्टबालतरुपल्लवलोभनीयं*
*पीतं मया सदयमेव रतोत्सवेषु।*
*बिम्बाधरं स्पृशसि चेत् भ्रमर प्रियायाः*
*त्वां कारयामि कमलोदरबन्धनस्थम् ॥12॥*

इत्युदित एवास्वादनीयः।

अविद्यमाने पुनरेतस्मिन् उत्पाद्यलवलावण्यललाम्नि प्रकरणे निष्कारणविस्मरणवैरस्यमितिहासांशस्येव रूपकस्यापि विरूपकतापत्तिनिमित्ततामवगाहते।

उत्पाद्यलवलावण्यादिति द्विधा व्याख्येयम्–यथा क्वचिदसदेवोत्पाद्यम्, क्वचिदौचित्यत्यक्तं सदप्यन्यथासंपाद्यम् सहृदयहृदयाह्लादनाय।

यथोदात्तराघवे मारीचवधः। तच्च प्रागेव व्याख्यातम्। एवमन्यदप्यस्या वक्रताविच्छित्तेरुदाहरणं महाकविप्रबन्धेषु स्वयमुत्प्रेक्षणीयम्।

*निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।*
*गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः॥13॥*

(इत्यन्तरश्लोकः।)

अपरमपि प्रकरणवक्रताप्रकारमाविर्भावयति—

**प्रबन्धस्यैकदेशानां फलबन्धानुबन्धवान्।**
**उपकार्योपकर्तृत्वपरिस्पन्दः परिस्फुरन् ॥5॥**

**असामान्यसमुल्लेखप्रतिभाप्रतिभासिनः।**
**सूते नूतनवक्रत्वरहस्यं कस्यचित्कवेः ॥6॥**

'सूते'—समुन्मीलयति। (किं) "नूतनक्रत्वरहस्यं" —अभिनववक्रभावोपनिषदं। "कस्यचित्"—(न) सर्वस्य। "कवेः"—कवयितुः, प्रस्तुतौ (चित्य) चारुरचनाविचक्षणस्येति यावत्। कः "उपकार्योपकर्तृत्वपरिस्पन्दः" —अनुग्राह्यानुग्रहकत्वमहिमा। किं कुर्वन् "परिस्फुरन्"—समुन्मीलयन्। किंविशिष्टः—"फलबन्धानुबन्धवान्" = प्रधानकार्यानुसन्धानवान् कार्यानुसन्धाननिपुण (इति भावः)। कथमेवंविधस्य इत्याह— "असामान्यसमुल्लेखप्रतिभाप्रतिभासिनः"—निरुपमोन्मीलितशक्तिविभवभ्राजिष्णोः। केषां "प्रबन्धस्यैकदेशानां" = प्रकरणानाम्।

तदिदमुक्तं भवति—प्रातिस्विकसंनिवेशशोभिनामपि प्रबन्धावयवानां प्रधानफलसंबन्धनिबन्धानुग्राह्यानुग्राहकभावः स्वभावसुभगप्रतिभाप्रकाश्यमानः कस्यचिद्विचक्षणस्य वक्रताचमत्कारिणः कवेरलौकिकं (कथाप्राणप्रौढिप्ररूढ) वक्रतोल्लेखलावण्यं समुल्लासयति। यथा पुष्पदूषितके द्वितीयेऽङ्के—

प्रस्थानात् प्रतिनिवृत्य निबिडानुरागात् (अन्धकारावृतायां) विभावर्याममन्दमदनोन्मादमुद्रेण समुद्रदत्तेन निजभार्यानिकेतनं तुल्यदिवसं नन्दयन्तीसंगमाय मलिम्लुचेनेव प्रविशता प्रकम्पावेगविकलालसकायनिपातननिहतनिद्रस्य द्वारदेशशायिनः कलहायमानस्य कुवलयस्यो-

त्कोचकारणं स्वकरादङ्गुलीयकदानं यत् कृतं, तच्चतुर्थेऽङ्के मथुराप्रतिनिवृत्तेन तेनैव श्वशुरस्य समावेदितसमुद्रदत्तवृत्तान्तेन कुलकलङ्कातङ्कदर्थ्यमानस्य सार्थवाहसागरदत्तस्य स्तनयस्पर्श (समाहित) मान(सस्य) स्नुषाशील-शुद्धिमुन्मीलयत्तदुपकाराय कल्पते। तथा च सागरदत्तस्य वचनम्

*तदङ्गुलीयं सुतनामचिह्नं*
*चरित्रशुद्धिं विशदीकरोति।*
*ममापि सामान्यसमुद्यतोऽनु-*
*तापस्तु पापस्य भवेत्स शुद्धिः ॥14॥*

अत्र भृत्य, किमिति त्वया प्रथममस्माकं (नोक्तमिति पृष्टस्य) कुवलयस्योत्तरं–

*तदोपणिकमन्ते राम पणि यात*
*त हिं एव्व पविसंति।*

दिग्धाच्छादितं च मए स अं एव्व पेखिअं छन्वाहनसंपदं पुतन वेदइस्सदि॥15॥ तत एवावधार्यम्।

यथोत्तररामचरिते–

पृथुगर्भभरखेदितदेहाया विदेहराजदुहितुर्विनोदाय दाशरथिना चिरंतनराजचरितचित्ररुचिं दर्शयता निर्व्याजविजयविजृम्भमाण-जृम्भकास्त्राण्युद्दिश्य

*"सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति"*

इति यदभिहितं तत्पञ्चमाङ्के प्रवीरचर्याचतुरेण चन्द्रकेतुना क्षणं समरकेलिमाकाङ्क्षता तदन्तरायकलितकलकलाडम्बराणां वरूथिनीनां सहजजयोत्कण्ठाभ्राजिष्णोर्जानकीनन्दनस्य जृम्भकास्त्रव्यापारेण कमप्युप-कारमुत्पादयति। तथा च तत्र लवः–

*"भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्*
*सैन्यानि संस्तम्भयामि"*

सुमन्त्रः–तत्किमकस्मादुल्लोलाः सैन्ययोधाः प्रशाम्यन्ति।

लवः–पश्याम्येनमधुना प्रगल्भम्।

सुमन्त्रः–(ससंभ्रमम्) वत्स, कुमारेणानेन जृम्भकास्त्रमभिमन्त्रितम्।

चन्द्रकेतुः—आर्य, कः सन्देहः—

*व्यतिकर इव भीमो वैद्युतस्तामसश्च*
*प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।*
*अभिलिखितमिवैतत् सैन्यमस्पन्दमास्ते*
*नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥16॥*

आश्चर्यम् (आश्चर्यम्)—

*पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-*
*रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः।*
*कल्पक्षेपकठोरभैरवमरुद्ध्वस्तैरवस्तीर्यते*
*नीलाम्भोदतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥17॥*

इत्यादि। एक एवायमेकदेशानामिति बहुवचनम्। अत्र द्वयोरपि बहूनामुपकार्योपकारकत्वं स्वयमुत्प्रेक्षणीयम्।

*एकप्रकरणप्राप्तप्रकारान्तरशोभितः।*
*प्रबन्धो भासते नूतनपरिस्पन्द इवोदितः ॥18॥*

(इत्यन्तरश्लोकः)।

अस्या एव प्रकारान्तरं प्रकाशयति—

**प्रतिप्रकरणं प्रौढप्रतिभाभोगयोजितः।**
**एक एवाभिधेयात्मा बध्यमानः पुनः पुनः॥7॥**

**अन्यूननूतनोल्लेखरसालंकरणोज्ज्वलः।**
**बध्नानि वक्रतोद्भेदभङ्गीमुत्पादिताद्भुताम् ॥8॥**

"बध्नाति"—नियन्त्रयति निबन्धयतीति यावत्। कां—"वक्रतोद्भेदभङ्गीम्"— गम्भीरवक्रभावाविर्भावितां शोभाम्। किंविशिष्टां—"उद्भाविताद्भुताम्" कन्दलितकुतूहलाम्। कः "एक एवाभिधेयात्मा"— तदेव वस्तुस्वरूपम्। किं क्रियमाणः—"बध्यमानः"— प्रस्तुतौचित्यचारु-रचनामात्रस्पन्दमानः। कथं "पुनः पुनः"—वारं वारं। क्व—"प्रतिप्रकरणम्" प्रकरणे प्रकरणे, स्थाने स्थाने इति यावत्। नन्वेवं पुनरुक्ततापात्रतां

समासादयतीत्याह–"अन्यूननूतनोल्लेखरसा- लंकरणोज्ज्वलः"– अविकला-भिनवोल्लासशृङ्गाररूपकादिपरिस्पन्दभ्राजिष्णुः। कीदृशः– "प्रौढप्रतिभाभोग-योजितः" प्रगल्भतरप्रज्ञाप्रकारप्रकाशितः।

अयमस्य परमार्थः–तदेवं सकलचन्द्रोदया(दि) प्रकरणप्रकारेषु वस्तु प्रस्तुतकथासंविधानकानुरोधात् मुहुर्मुहुरुपनिबध्यमानं यदि परिपूर्णपूर्वविरूपरसालंकाररामणीयकनिर्भरं भवति तदा कामपि रामणीयकमर्यादां वक्रतामवतारयति।

यथा हर्षचरिते–अभिनवभङ्गीपरिग्रहग्रथितसौभाग्योपसंपत् (धरा) धर-विभावरीविराम(ादि) रामणीयककर्त्री नैकस्थानेषु चमत्कुरुते। तत एव च तदास्वादनीयम्। बहुत्वादत्र वर्णयितुमशक्यम्।

यथा वा तापसवत्सराजे रसविलाससर्वस्वनिवासायमानत्वादुदाहरणम् करुणः प्रत्यङ्गमभिनवाभिरुक्तो भङ्गीभिरुद्भासते; यथा द्वितीयेऽङ्के–

राजा–(सकरुणं पुरोऽवलोक्य) हा देवि पादपैरप्यपगतासि

*कुरवकतरुर्गाढाश्लेषं, मुखासवलालनां*
*बकुलविटपी, रक्ताशोकस्तथा चरणाहतिम्।*
*तव सुकृतिनः संभाव्यैते प्रसादमहोत्सवान्*
*अनुगतदशाः सर्वे, सर्वश्शठो न यथा वयम् ॥19॥*

यथा अन्यत्र हि–

प्रदीप्तान्तःपुरेण कृशानुना कवलितान् विलासशाखिनः पश्यन्नभिनव-शोकावेशविवशान्तःकरण; "साक्षाद्देवीमनुसरन्तस्ते" इति समुत्पन्नमतिनि-र्विकल्पमवयवैकैकप्रसादपात्रेभ्योऽपि अविद्वद्भ्योऽपि समनुष्ठितसमुचित-साहसेभ्यः समुचिततादृशप्रसादसाधनमभ्यस्ततदास्वादानुभवसर्वस्वमप्यात्मानं तत्समय एव प्रियानुगमनमनाचरन्तमधमं मन्यमानो निरुपमव्रीडानिवेशनिर्भरं निर्भर्त्सयति वत्सराजः।

'धारावेश्म' इत्यादि, 'कर्ण' इत्यादि च श्लोकद्वयं प्रागुदाहृतमत्र योज्यम्। तृतीयेऽङ्के

राजा–(सास्रं निश्वस्य)

*सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते*
*त्रासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तदा।*
*हा नाथेति मुहुः प्रलापपरया दग्धं वराक्या तथा*
*शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे ॥20॥*

अत्र शान्तेनापि निर्वाणेनापि तेनाम्लानमालतीमुकुलकोमलदेह-विदाहानुमीयमाननैर्घृण्येन दहनेनाप्येकव्यापारा(नपगत) करणा वयमद्यापि दह्यामहे इति नूतनोल्लेखविरोधालंकारेण करुणा पूर्वं निविष्टापि वक्रतां नीयते। अपि च तथा विधातुं कोमलत्वादेव देव्या तदैव दग्धं, वयं पुनर्वज्रसारातिकठोरिमाणोऽद्यापि दह्यामहे न भस्मीभवाम इति विशेषणं प्रस्तुतमेवोल्लासयति। चतुर्थेऽङ्के

राजा–(सकरुणमात्मगतम्) हा देवि

*चक्षुर्यस्य तवाननादपगतं नाभूत्क्वचिन्निर्वृतं*
*येनैषा सततं त्वदेकशयनं वक्षःस्थली कल्पिता।*
*येनोक्तासि विना त्वया बत जगच्छून्यं क्षणाज्जायते*
*सोऽयं दम्भधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः ॥21॥*

इति सखेदमास्ते।

अत्र हि क्वचिदिति केलिक्लमापंनोदननिमित्तं निकेतपृष्ठसंचारणीयासु लीलासु अप्रयत्नसुलभदर्शने तनुमात्रोन्मीलितसंपातबिम्बलावण्यलेशशङ्कमा-नत्वदाननान्तेवासित्वे चन्द्रमसि दर्शितनिजवाक्योपारूढपदार्थत्वात् पर्यालोचनया (करुणमेव) प्रत्याययति। येनेति पर्यङ्कार्धशयनमपि प्रवासपदमिव परिहरतीति तदेव व्यनक्ति। क्षणादिति एतावन्तमपि कालं त्वया विरहितस्य जीवतः कियदौग्र्यं मम। (एवं) पुनः सकलोऽप्यलीक एवायं प्रेम बन्धोऽवधार्यतामिति तथैव प्रतिपादयति। सोऽयमित्यादि प्रागेव व्याख्यातम्।

एवमेतत् अन्तरवाक्यकदम्बकाभिव्यक्ताभिनवभङ्ग्या पूर्वस्मात्स्वादादा-स्वादान्तरसम्पदं कामपि करुणस्य कुरुते।

पञ्चमेऽङ्के–

राजा–(सविशेषोत्कण्ठं निश्वस्य)

*भ्रूभङ्गं रुचिरे ललाटफलके तारं समारोपयेत्*
*बाष्पाम्बुप्लुतपीतपत्ररचनां कुर्यात्कपोलस्थलीम्।*
*व्यावृत्तैर्विनिबद्धचाटुमहिमामालोक्य लज्जानता*
*तिष्ठेत् किं कृतकोपचारकरुणैराश्वासयैनां प्रियाम् ॥22॥*

अत्राधिगमप्रत्याशाऽसंभावितपद्मावतीपाणिपीडस्यानङ्कुरितमनोरथलेशस्यापि तत्कालकन्दलितौत्सुक्यपरवशीकृतान्तःकरणवृत्तेरुन्माद्यत इव प्राप्तामेव प्रद्योतराजपुत्रीं (मन्वानस्य) राज्ञः प्रसादसमयसमुचितप्रकार (चिन्तनं काष्ठां) करुणस्यावतारयति। तत्रैवाङ्के

*किं प्राणा न मया तवानुगमनं कर्तुं समुत्साहिता*
*बद्धा किं न जटा न वा प्ररुदितं भ्रान्तं वने निर्जने।*
*त्वत्संप्राप्तिविलोभनेन पुनरप्यूनेन पापेन किं*
*किं कृत्वा कुपिता यदद्य न वचस्त्वं मे ददासि प्रिये ॥23॥*

"इति रोदिति" इत्यन्तेन मनागुन्मादमुद्राप्युन्मीलिता तमेव प्रोद्दीपयति। षष्ठेऽङ्के

राजा–हा देवि !

*त्वत्संप्राप्तिविलोभनेन सचिवैः प्राणा मया धारिताः*
*तनमत्वाऽत्यजतः शरीरकमिदं मे नास्ति निःस्नेहता।*
*आसन्नोऽवसरस्तदानुगमने जाता धृतिः किं त्वयं*
*खेदो यच्छतधा गतं न हृदयं तद्वत्क्षणे दारुणे ॥24॥*

अत्र नैराश्येन राशीभूतभूरितरशोकावेगवेदनादह्यमानमानसप्रतीकारकारणं कालिन्दीनामनिम्नगासंगमनम्। तस्य प्रियानुगममपि वस्तु वाच्यविस्तरं प्रकरणाभरणायते।

"प्रोच्यते कियम्" इत्युक्त्या विविधैर्वा विलासैः, कुतः कथोपकारकादिति कथायाः समाशङ्कितविच्छेदायाः प्ररोहयतीति।

किमुक्तं भवति—स्वल्पोऽपि वाच्यविशेषः सविशेषविस्फारितः समुद्घाटितरसकवाटद्धारसरसोक्तिविसरविकासिन्या प्रकरणविच्छित्त्या वितन्यमानः कमपि वक्रिमाणमासादयति। यथा रघुवंशे मृगयाप्रकरणे—

अत्र हि तरङ्गिणीतीरलेखास्वाखेटवाटोद्यतेन प्रमाद्यता दशरथेन राज्ञा स्थविरान्धतपस्विबालवधो व्यधीयतेति एकवाक्यशक्यप्रतिपादनोऽप्ययमर्थः पुनः परमार्थसरससरस्वतीसर्वस्वायमानप्रतिभाविधानकुशलेन कविना तादृश्या प्रकरणविच्छित्त्या विस्फारितश्चेतनचमत्कारकारणतामधितिष्ठति।

तथाहि—यद्यत्रानेकनक्तन्दिनानुबन्धिविधविमृगयाव्यापारपरवशीकृतान्तः-करणकवलितसकलतदितर(व्यापार) व्यावृत्त्यवसरप्रसरदभ्यासरसोदरात्मक-मृगयानुरागगरिमातः प्राण्येतादृग्रूपो न प्रतिहन्येत, तदा सदाचारसंपादनचणे त्रिभुवनाभयदीक्षाधिकारिणि किरणमालिनः कुले तिलकायमानस्याखिल-विद्यापारावारपारदृश्वनः कीर्तिधनस्य धन्य (दशरथ) नाम्नो धरित्रीपतेः पवित्रितत्रिदिवाधिपार्धासनस्य तथाविधाकरणीयकरणं महर्षिणाप्युदाह्रियमाण-मनुपपन्नप्रायमेव प्रतिभासेतापाततः। इदं च तत्रैव सकलमुन्मीलितं मनागुदाह्रियते।

*व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः*
*फुल्लासनाग्रविटपानिव वायुरुग्णान्।*
*शिक्षाविशेषलघुहस्ततया स धन्वी*
*तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥25॥*

*अपि तुरगसमीपादुत्पतन्तं मयूरं*
*न स रुचिरकलापं बाणलक्षीचकार।*
*सपदि गतमनस्कश्छिन्नमाल्यानुकीर्णे*
*रतिविगलितबन्धे केशहस्ते प्रियायाः ॥26॥*

*लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः*
*प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहात्।*
*आकर्णकृष्टमपि कामितया च धन्वी*
*बाणं कृपामृदुमनाः प्रतिसंजहार ॥27॥*

इत्यादि। एतैर्हि विचित्रवाच्यवाचकौचित्यचारुभिर्वाक्यविशेषैर्विविध-व्यापारपारवश्यमतितरां प्रतीयते। यथा–

*स ललितकुसुमप्रवालशय्यां*
*ज्वलितमहौषधिदीपिकासनाथाम्।*
*वनरतिरतिवाहयांबभूव*
*क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥28॥*

अत्र वनरतिरिति विशेषणवक्रता वने स्थित्या विलासगृहकेलीपर्यङ्के प्रेयसीं समेत्य मधुगोष्ठीप्रभृत्युपभोगप्रतीतिप्रत्याख्यातप्रतीतिं प्रतिपादयन्त्या प्रस्तुतरसावेश एव वितन्यते। त्रियामेति वचनवक्रतोल्लेखेन चिरतरसमयमन्ध (कारः) समुन्मील्यते। रूढिवक्रतामहिम्ना च निर्भरान्धकारनिवारित-रुचिरव्यापारप्रकारान्तरसान्तरायकारित्वात् तत्प्रतिकूलता प्रतिपाद्यते। अत एवातिवाहयांबभूवेति क्रियावक्रत्ववैचित्र्येण दारुणदेहवेदनां शयनगतः अपगमयामास, परमपरिश्रमविधाने निद्रा रसदायिनीत्यभिननन्द। यथा च

*इति विस्मृतान्यकरणीयमात्मनः*
*सचिवावलम्बितधुरं धरापतिम्।*
*परिवृद्धरागमनुबन्धसेवया*
*मृगया जहार चतुरेव कामिनी ॥29॥*

अत्र जहारेति क्रियावक्रत्वविच्छित्त्या, मृगयाया करणीयेतरभावनासुविक-लान्तःकरणत्वमङ्कुरितं महीभर्तुः। तथा

*अथ जातु रुरोर्गृहीतवर्त्मा*
*विपिने पार्श्वचरैरलक्ष्यमाणः।*
*श्रमफेनमुचा तपस्विगाढां*
*तमसां प्राप नदीं तुरङ्गमेण ॥30॥*

अत्र तपस्विगाढामिति विशेषणवक्रतया विविधधर्माचारपरायणतापससंकुलां तमसां पश्यन्नपि शब्दश्रवणमात्रात् शरं व्याकृष्य शरमोक्षमविकलान्तःकरणः कथमकुर्वतेति प्रकाश्यते।

"अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः" इत्यनेन न्यायेन परधाराधिरूढदुर्धरव्यसनरागान्धकारकवलितविवेकदृष्टयस्तथाविधा अशुद्धाध्वनि सञ्चरन्त इत्युपपत्तिरप्युपपादिता। उत्तरकथोपकारोऽप्येकदेशस्यास्त्येव। तथा हि–

*दिष्टान्तमाप्स्यति भवानपि पुत्रशोक-*
*दन्ते वयस्यहमिवेति तमुक्तवन्तम् ॥31॥*

इति विशीर्णतापसवितीर्णशापस्य तापसं प्रति प्रतिवचनं कौसल्यापतेः–

तथा हि

*शापोऽप्यदृष्टतनयाननपद्मशोभे*
*सानुग्रहो भगवता मयि पातितोऽयम्।*
*कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धः*
*बीजप्ररोहजननीं दहनः करोति ॥32॥*

अत्र शाप इति एवंविधापचारप्राग्भारप्रभवो भवतु नाम। सानुग्रह इति अनुग्रहः पुनरयमनुपपन्न एवास्यामवस्थायाम्। भगवतेत्यनर्थदर्शनेन सहजदयालुना। यदि वा भगवता शापोऽपि इति शापानुग्रहयोर्दहनवारिणोरिवैककालमेकविषयवर्तित्वमसतोरपि भगवत् (स्वरूप) संपत्सामर्थ्यादेव संभाव्यते, अदृष्टतनयाननपद्मशोभे मयि एतस्मादेवानुग्रहादवश्यंभाविनः सुचिरकालाभिकाङ्क्षितस्य सुतावलम्बनतनोर्जीवितफलस्य विलोकनोत्कण्ठापारवश्यात् (सार्थक्यम्) इत्यलमतिप्रसङ्गेन।

## 18. तर्कसरण्या काव्यविमर्शनम्

### महिमभट्टः – व्यक्तिविवेकः (III. 4-19)

यदपि च केचिदाचक्षते समानायामर्थगतौ शब्देनापशब्देन च शास्त्रेण धर्मनियमः क्रियते साधुभिरेव भावितव्यं नासाधुभिरिति, तत्र कूपखानकवद् वृत्तिर्भविष्यतीत्यादिना तैरेव प्रतिविहितम्। सा चेतिहासपुराणागमशास्त्रेष्वप्यस्त्येवेति नागमविरोधः। त्रिविधं हि शास्त्रं शब्दप्रधानमर्थप्रधानमुभयप्रधानञ्चेति। तत्र शब्दप्रधानं वेदादि अध्ययनादेवाभ्युदयश्रवणात् मनागपि पाठविपर्यासे प्रत्यवायश्रवणाच्च। अर्थप्रधानमितिहासपुराणादि तस्यार्थवादमात्ररूपत्वात्। उभयप्रधानं सर्गबन्धादि काव्यं तस्य रसात्मकत्वाद् रसस्य चोभयौचित्येन परिपोपदर्शनत्। काव्यस्यापि शास्त्रत्वमुपपादितमेव। तदेवं यदर्थप्रधानमिष्यते तच्छ्रवणधारणार्थावबोधानुष्ठानोत्थितेन धर्मेणासाधुशब्दोदीरणोदितोऽधर्मः प्रतिहतो भवतीयमसौ कूपखानकवृत्तिः। धर्मस्य तदुत्थितत्वमुपगतमेव—

*यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद् व्यवहारकाले।*
*सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥*

इति

*असाधुश्चापशब्दश्च द्विधा शब्दः प्रकीर्त्तितः।*
*तत्रासाधुर्न साध्यो यः प्रकृतिप्रत्ययादिभिः ॥4॥*

*शब्दादपेतोऽपशब्दः शब्दनाकरणात्मनः।*
*शब्दना हि परामर्शो वाच्यार्थविषयोऽस्य यः ॥5॥*

*एवञ्चासाधुशब्दोऽपि नापशब्दत्वमर्हति।*
*न सोऽप्यभ्येति साधुत्वं तयोर्विषयभेदतः ॥6॥*

ततश्च—

*सामर्थ्यादेव शब्दस्य विषयेऽवगते सति।*
*न प्रयोगोऽस्य न ह्येष स्वनिष्पत्त्यै प्रवर्त्तते ॥7॥*

*अत एव प्रकृत्यर्थमात्रं तत्र प्रयुञ्जते।*
*सङ्ख्यासाधनकालादेरानुगुण्यानपेक्षिणः ॥8॥*

*इयता चापशब्दत्वं न तेषामवकल्पते।*
*अर्थेषु शब्दनाकर्मकरणत्वानपायतः ॥9॥*

*असाधूच्चारणाद्यस्तु तत्राधर्मः प्रवर्त्तते।*
*कूपखानकवद्वृत्तेः सोऽर्थज्ञानान्निवर्त्तते ॥10॥*

*अथ वार्थपरिज्ञानमास्तां तत्पठनादपि।*
*धारणादपि वा पुंसां श्रूयतेऽभ्युदयः परः ॥11॥*

इति सङ्ग्रहश्लोकाः। तस्मादुपपत्तिशून्य एवायं गतानुगतिकतया अनेकार्थशब्दप्रयोगविप्रलब्धव्याख्यातृपरम्परासमयमात्रप्रवर्त्तितः शब्दशक्तिमूलानुस्वानरूपार्थान्तरप्रतीतिपक्षः। व्याख्यातारोऽप्यलीकविद्वन्मानितया प्रायेणापव्याख्यानैर्न केवलमात्मानं यावत् तत्रभवतो महाकवीनपि ह्रेपयन्तो दृश्यन्ते। तद्यथा—

*तां जानीयाः परिमितकथां जीवितं मे द्वितीयं*
*दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।*
*गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बाला।*
*जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥*

इत्यत्र पाठमिममबुद्ध्वैव कलितकविहेवाकाः पराकृतप्रतीतिचारुतातिशयास्ते

*'अवैमि तदवज्ञानाद्यत्नापेक्षो मनोरथः।'*

इत्यादौ दृष्टामपि वाक्यार्थकर्मतां मन्यतेरपश्यन्तो बालायाः कर्मतामस्य मन्यमानाः स्वरसन्धिवशाद्विकृतमिवशब्दमेव भ्रमाद् वाशब्दं परिकल्प्यापव्याख्यामारभन्ते। न ह्येवमर्थस्य वैचित्री काचित् समुन्मिषति। नापि महाकवेः कालिदासस्यान्वयगतिरियं क्वचनापि प्रबन्धेऽवधारितपूर्वा यदयं रसनिधाने काव्ये व्याधिमिव वाशब्दमिवार्थे प्रयुञ्जीतेति। **कथं** तर्हि 'चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली'ति तस्यैव कवेरयं प्रयोगः। **उच्यते**। श्लिष्टत्वादिविभावितार्थपाठेन केनचित् कल्पितोऽयं पाठः। स हि जलधिर्निशीवेति द्रष्टव्यः। यथा च—

*"ग्रामेऽस्मिन् पथिकाय पान्थ! वसतिर्नैवाधुना दीयते*
*रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा।*
*तेनोद्गाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं*
*येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति॥"*

इत्यत्र हि काचित् वसतिं प्रार्थयमानं पथिकयुवानुद्दिश्योत्पन्नमन्मथ-व्यथावेशा तस्यान्यानुरागितामाशङ्कमाना दारुणतरपरिणामोऽन्यासक्तजनानुराग इति न चेदसि कस्याञ्चिदनुरक्तस्तदिदमखिलमेव गृहमयं च जनस्तवायत्त एवान्यथा गम्यतामिति स्वाभिप्रेतमर्थमस्मै निवेदयितुकामा पूर्ववृत्तान्तं वसतिविहितोपकारकामिनी मरणावेदनफलं वक्तुमुपक्रमत इति तदभिप्रायमविद्वांसस्ते पुरुषवधावेदनं तदिति मन्यमानास्तथैवापव्याचक्षते। तच्चायुक्तमेव रसभङ्गप्रसङ्गात्। उभयोरनुरागातिशययोगेऽपि पुरुषवधवर्णनस्यात्यन्तमनुचितत्वात् खलार्थकरणार्थयोरसङ्गतिप्रसङ्गाच्च। न हि योऽस्ववशः सन् म्रियते तस्य तन्मरणं यद्यपि कस्यचिदुपकारायापकाराय वा स्यात् तथापि तदपेक्षमस्य सौजन्यं खलत्वं वा न शक्यं व्यपदेष्टुम्। तयोरभिसन्धायकरणे तस्य तद्व्यपदेश्यत्वोपपत्तेः अन्यथातिप्रसङ्गादिति तन्मतानुविधायिनोऽन्धपरम्पराक्रमेण व्याख्यातारोऽद्यापि तेनैवोपपत्त्यतिपातिना पथा सञ्चरन्त इति स्थितम्। **ननु**

*यावद्भिरर्थैः सम्बन्धः प्राक्छब्दस्यावधारितः।*
*तावत्स्वन्यनिराशंसः श्रुतः सन् कुरुते गतिम् ॥12॥*

*ततो यदर्थानुगुणा सामग्र्यस्योपलभ्यते।*
*स एवार्थो व्यवस्थाप्यः सत्स्वप्यन्येष्वबाधितः ॥13॥*

*तेनोभयार्थानुगुणा व्यनक्त्यर्थावुभावपि।*
*ययोः सामर्थ्यतः सिध्येदुपमानोपमेयता ॥14॥*

*इत्थमर्थान्तरे बुद्धिं ध्वनिरेवादधात्ययम्।*
*तन्निबन्धननिर्बन्धो निर्निबन्धन एव सः ॥15॥*

*एवञ्चात्मन्यधिक्षेप्ये किमर्थं तत्त्वदर्शिनः।*
*व्याख्यातारोऽप्यधिक्षिप्ता मोहात् को वेत्ति वा हितम् ॥16॥*

उच्यते–

*यद्यप्यर्थेषु सर्वेषु प्राक्छब्दः कुरुते मतिम्।*
*तथापि तद्व्यवस्थार्थं विशेषणमपेक्षते ॥17॥*

*तच्चेत् तद्वदनेकार्थं मुख्योऽर्थः कोऽवतिष्ठताम्।*
*यस्तत्र प्राकरणिकः पौर्वापर्यगतिः कुतः ॥18॥*

*सा चेत् प्रकरणाद्यो हि प्रकृतस्तस्य सा पुरः।*
*पश्चादन्यस्य सामर्थ्यगम्या यस्योपमानता ॥19॥*

## 19. पद-वाक्य-प्रबन्धेषु औचित्यम्

क्षेमेन्द्रः – औचित्यविचारचर्चा (I. 1-13)

कृतारिवञ्चने दृष्टिर्येनाञ्जनमलीमसा।
अच्युताय नमस्तस्मै परमौचित्यकारिणे ॥1॥

कृत्वापि काव्यालंकारां क्षेमेन्द्रः कविकर्णिकाम्।
तत्कलङ्कं विवेकं च विधाय विबुधप्रियम् ॥2॥

औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥3॥ (युग्मम्)

काव्यस्यालमलंकारैः किं मिथ्यागणितैर्गुणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते ॥4॥

अलंकारास्त्वलंकारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥5॥

परस्परोपकारकरुचिरशब्दार्थरूपस्य काव्यस्योपमोत्प्रेक्षादयो ये प्रचुरालंकारास्ते कटककुण्डलकेयूरहारादिवदलंकारा एव, बाह्यशोभाहेतुत्वात्। येऽपि काव्यगुणाः केचन तल्लक्षणविचक्षणैः समाम्नातास्तेऽपि श्रुतसत्यशीलादिवद्गुणा एव, आहार्यत्वात्। औचित्यं त्वग्रे वक्ष्यमाणलक्षणं स्थिरमविनश्वरं जीवितं काव्यस्य, तेन विनास्य गुणालंकारयुक्तस्यापि निर्जीवत्वात्। रसेन शृङ्गारादिना सिद्धस्य प्रसिद्धस्य काव्यस्य धातुवादरससिद्धस्येव तज्जीवितं स्थिरमित्यर्थः॥

उक्तार्थस्यैव विशेषमाह–

उचितस्थानविन्यासदलंकृतिरलंकृतिः।
औचित्यादच्युता नित्यं भवन्त्येव गुणा गुणाः ॥6॥

अलंकृतिरुचितस्थानविन्यासादलंकर्तुं क्षमा भवति, अन्यथा त्वलंकृतिव्यपदेशमेव न लभते। तद्वदौचित्यादपरिच्युता गुणा गुणतामासादयन्ति अन्यथा पुनरगुणा एव ॥

यदाह—

*कण्ठे मेखलया नितम्बफलके तारेण हारेण वा*
*पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।*
*शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-*
*मौचित्येन विना रुचिं प्रतनुते नालंकृतिर्नो गुणाः॥'*

किं तदौचित्यमित्याह—

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥7॥**

यत्किल यस्यानुरूपं तदुचितमुच्यते, तस्य भावमौचित्यं कथयन्ति॥ अधुना सकलकाव्यशरीरजीवितभूतस्यौचित्यस्य प्राधान्येनोपलभ्यां स्थितिं दर्शयितुमाह—

**पदे वाक्ये प्रबन्धार्थे गुणेऽलंकरणे रसे।**
**क्रियायां कारके लिङ्गे वचने च विशेषणे ॥8॥**

**उपसर्गे निपाते च काले देशे कुले व्रते।**
**तत्त्वे सत्त्वेऽप्यभिप्राये स्वभावे सारसंग्रहे ॥9॥**

**प्रतिभायामवस्थायां विचारे नाम्न्यथाशिषि।**
**काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम् ॥10॥**

एतेषु पदप्रभृतिषु स्थानेषु मर्मस्विव काव्यस्य सकलशरीरव्यापि जीवितमौचित्यं स्फुटत्वेन स्फुरदवभासते ॥

तेषूदाहरणानि क्रमेण दर्शयितुमाह—

**तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम्।**
**चन्द्राननेव कस्तूरीकृतं श्यामेव चान्दनम् ॥11॥**

एकमेवोचितं पदं तिलकायमानं बिभ्राणा सूक्तिः समुचितपरभाग-शोभातिशयेन रुचिरतामावहति ॥

यथा परिमलस्य—

*मग्नानि द्विषतां कुलानि समरे त्वत्खड्गधाराकुले*
*नाथास्मिन्निति बन्दिवाचि बहुशो देव श्रुतायां पुरा।*

*मुग्धा गुर्जरभूमिपालमहिषी प्रत्याशया पाथसः*
*कान्तारे चकिता विमुञ्चति मुहुः पत्युः कृपाणे दृशौ ॥*

अत्र मुग्धापदेनार्थौचित्यचमत्कारकारिणा सूक्तिः शरदिन्दुवदनेव-श्यामतिलकेन श्यामेव शुभ्रविशेषकेण विभूषिता सकलकविकुलललामभूतां विच्छित्तिमातनोति ॥

न तु यथा धर्मकीर्तेः—

*लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः*
*स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः ।*
*एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता*
*कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥*

अत्र 'तन्व्याः' इति पदं केवलशब्दानुप्रासव्यसनितया निबद्धं न कांचिदर्थौचित्यचमत्कारकणिकामाविष्करोति। 'सुन्दर्याः' इत्यत्र पदमनुरूपं स्यात्। अन्यानि वा निरतिशयरूपलावण्यव्यञ्जकानि। तन्वीपदं तु विहरविधुररमणीजने प्रयुक्तमर्थौचित्यशोभां जनयति ॥

यथा श्रीहर्षस्य—

*परिम्लानं पीनस्तनजघनसङ्गादुभयत-*
*स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम् ।*
*इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः*
*कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥*

अत्र सागरिकाया विरहावस्थासूचकम् 'कृशाङ्ग्याः' इति पदं परममौचित्यं पुष्णाति ॥

वाक्यगतमौचित्यं दर्शयितुमाह—

**औचित्यरचितं वाक्यं सततं संमतं सताम् ।**
**त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम् ॥12॥**

औचित्यरचितं वाक्यं काव्यविवेकविचक्षणानामभिमततमम्॥

यथा मम विनयवल्ल्याम्—

*देवो दयावान्विजयो जितात्मा यमौ मनःसंयममाननीयौ ।*
*इति ब्रुवाणः स्वभुजं प्रमार्ष्टि यः कीचकाकालिककालदण्डम् ॥*
*धीरः स किर्मीरजटासुरारिः कुबेरशौर्यप्रशमोपदेष्टा ।*
*दृष्टो हिडिम्बादयितः कुरूणां पर्यन्तरेखागणनाकृतान्तः॥*
*(युग्मम्)*

अत्र भीमस्य भीमचरितोचितकीचकाकालिककालदण्डहिडिम्बादयितादिभिः पदैरुन्निद्ररौद्ररसस्वरूपानुरूपो वाक्यार्थः सजीव इवावभासते॥

यथा वा राजशेखरस्य—

*संबन्धी पुरुभूभुजां मनसिजव्यपारदीक्षागुरु-*
*गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः ।*
*सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युति-*
*श्चन्द्रः सुन्दरि दृश्यतामयमितश्चण्डीशचूडामणिः ॥*

अत्रापि चन्द्रमसः शृङ्गारान्तरङ्गैरनङ्गोद्दीपनैः पदैर्निर्वर्तितो वाक्यार्थः सदर्थौचित्यसामर्थ्येनात्यर्थमर्थनीयतां प्राप्तः ॥

न तु यथास्यैव—

*नाले शौर्यमहोत्पलस्य विपुले सेतौ समिद्वारिधेः*
*शश्वत्खड्गभुजंगचन्दनतरौ क्रीडोपधाने श्रियः ।*
*आलाने जयकुञ्जरस्य सुदृशां कंदर्पदर्पे परं*
*श्रीदुर्योधनदोष्णि विक्रमपरे लीनं जगन्नन्दतु ॥*

अत्रातिशयपरकर्कशसोत्कर्षसुभटभुजस्तम्भस्यासमुचितेन कुवलयनालतुलाधिरोपणेन वाक्यार्थः सोपहासतयेव निबद्धः परिज्ञायते ॥

प्रबन्धार्थौचित्यं दर्शयितुमाह—

**उचितार्थविशेषेण प्रबन्धार्थः प्रकाश्यते ।**
**गुणप्रभावभव्येन विभवेनेव सज्जनः ॥13॥**

अम्लानप्रतिभाप्रकर्षोत्प्रेक्षितेन सकलप्रबन्धार्थाप्यायिपीयूषवर्षेण समुचितार्थविशेषेण महाकाव्यं स्फुरदिव चमत्कारकारितामापद्यते ॥

यथा कालिदासस्य—

*जातं वंशे भुवनविदिते पुष्करावर्तकानां*
*जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।*
*तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं*
*याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥*

अत्राचेतनस्य चेतनाध्यारोपेण मेघस्य दौत्ययोग्यताधानाय प्रथितपुष्करावर्तकपर्जन्यवंश्यत्वममात्यप्रकृतिपुरुषत्वं च यदुपन्यस्तं तेन समस्तप्रबन्धस्याभिधानतोत्प्रेक्षितेतिवृत्तरुचिरतरस्य निरतिशयमौचित्यमुद्द्योतितम् ॥

## 20. चमत्कारविवेचनम्

**क्षेमेन्द्रः – कविकण्ठाभरणम् ( III. 1-3)**

**तृतीयः संधिः ।**

अथ शिक्षितस्य कवेः सूक्तिचमत्कारमाह–

**सुकविरतिशयार्थी वाक्चमत्कारलोभा-**
**दभिसरति मनोज्ञे वस्तुशब्दार्थसार्थे ।**
**भ्रमर इव वसन्ते पुष्पकान्ते वनान्ते**
**नवकुसुमविशेषामोदमास्वादलोलः ॥1॥**

नहि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम् ।

**एकेन केनचिदनर्घमणिप्रभेण**
**काव्यं चमत्कृतिपदेन विना सुवर्णम् ।**
**निर्दोषलेशमपि रोहति कस्य चित्ते**
**लावण्यहीनमिव यौवनमङ्गनानाम् ॥2॥**

चमत्कारविरहो यथा मालवरुद्रस्य–

*वेल्लत्पल्लव संमिलल्लत लसत्पुष्प स्फुटत्कुड्मल*
*स्फूर्जद्गुच्छभर क्वणन्मधुकरक्रीडाविनोदाकर ।*
*रक्ताशोक सखे दयां कुरु हर प्रारब्धमाडम्बरं*
*प्राणाः कण्ठमुपागताः प्रियतमो दूरे त्वमेवंविधः ॥*

चमत्कारो यथा कालिदासस्य–

*रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-*
*स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।*
*कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः*
*सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥*

तत्र दशविधश्चमत्कारः–अविचारितरमणीयः, विचार्यमाणरमणीयः, समस्त-सूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलंकारगतः, रसगतः, प्रख्यातवृत्तिगतश्च ।

अविचारितरमणीयो यथा मम शशिवंशे—

*शूराः सन्ति सहस्रशः सुचरितैः पूर्णं जगत्पण्डितैः*
*संख्या नास्ति कलावतां बहुतरैः शान्तैर्वनान्ताः श्रिताः।*
*त्यक्तुं यः किल वित्तमुत्तममतिः शक्नोति जीवाधिकं*
*सोऽस्मिन्भूमिविभूषणं शुभनिधिर्भव्यो भवे दुर्लभः॥*

विचार्यमाणरमणीयो यथा मम पद्यकादम्बर्याम्—

*अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा*
*कण्ठे जीवः करकिसलये दीर्घशायी कपोलः।*
*अंसे वीणा कुचपरिसरे चन्दनं वाचि मौनं*
*तस्याः सर्वं स्थितमिति न तु त्वां विना क्वापि चेतः॥*

समस्तसूक्तव्यापी यथा मम शशिवंशे—

*माधुर्यानुभवेऽपि ते सुवदने तीक्ष्णाः कटाक्षाः परं*
*पर्यन्तस्थिततारका अपि नृणां रागानुबन्धोद्यताः।*
*नैवोज्झन्ति विवेकिनश्चपलतामुत्सेकसंवादिनी-*
*माश्चर्यं श्रवणौ स्पृशन्ति च पुनर्मारं च कुर्वन्त्यमी॥*

सूक्तैकदेशदृश्यो यथा मम पद्यकादम्बर्याम्—

*नित्यार्चा हृदयस्थितस्य भवतः पद्मोत्पलैश्चन्दनै-*
*स्त्वद्भक्तिस्त्वदनुस्मृतिश्च मनसि त्वन्नाममन्त्रे जपः।*
*सर्वत्रैव घनानुबन्धकलना त्वद्भावना सुभ्रुव-*
*स्तस्या जीवविमुक्तिरेव दिवसैर्देव त्वदाराधनात्॥*

शब्दगतो यथा मम चित्रभारतनाटके—

*इतश्चञ्चच्चूतच्युतमधुचया वान्ति चतुराः*
*समीराः संतोषं दिशि दिशि दिशन्तो मधुलिहाम्।*
*निशान्ते कान्तानां स्मरसमरकेलिश्रममुषो*
*विजृम्भन्ते जृम्भाकलितकमलामोदसुहृदः॥*

अर्थगतो यथा मम लावण्यवत्याम्—

*सदासक्तं शैत्यं विमलजलधारापरिचितं*
*घनोल्लासः क्ष्माभृत्पृथुकटकपाती वहति यः।*

*विधत्ते शौर्यश्रीश्रवणनवनीलोत्पलरुचिः*
*स चित्रं शत्रूणां ज्वलदनलतापं भवदसिः ॥*

शब्दार्थगतो यथा मम पद्यकादम्बर्याम्—

*किंचित्कुञ्चितकामकार्मुकलतामैत्री विचित्रा भ्रुवो-*
*र्नर्मोक्तिः स्मितकान्तिभिः कुसुमिता प्रागल्भ्यगर्भा गिरः ।*
*रागोत्सङ्गनिषङ्गिभिः सरसतासंवादिभिर्विभ्रमै-*
*रायुष्यं परमं तया रतिपतेः प्राप्तं मृगाक्ष्या वयः ॥*

अलंकारगतो यथा मम लांवण्यवत्याम्—

*स्तनौ स्तब्धौ तीक्ष्णं नयनयुगलं निम्नमुदरं*
*भ्रुवोर्वक्रा वृत्तिर्विहितमुनिमारोऽधरमणिः ।*
*तथासन्ने दैवादियति विषमे दुर्जनगणे*
*गुणी मध्ये हारः स्पृशति तव दोलातरलताम् ॥*

रसगतो यथा मम कनकजानक्याम्—

*अत्रार्यः खरदूषणत्रिशिरसां नादानुबन्धोद्यमे*
*रुन्धाने भुवनं त्वया चकितया योद्धा निरुद्धः क्षणम् ।*
*सस्नेहाः सरसाः सहासरभसाः सभ्रूभ्रमाः सस्पृहाः*
*सोत्साहास्त्वयि तद्बले च निदधे दोलायमाना दृशः॥*

प्रख्यातवृत्तिगतो यथा मम शशिवंशे—

*अग्रं गच्छत यच्छत स्वपृतनां व्यूहक्षितिं रक्षत*
*क्षोणीं पश्यत नश्यत द्रुततरं मा मा स्थितिं मुञ्चत ।*
*यत्नात्तिष्ठत पृष्ठतस्तनुभिदामुग्रा गतिः पत्रिणा-*
*मित्यासीज्जनभञ्जने रथपथे पार्थस्य पृथ्वी श्रुतिः॥*

**इत्युक्त एष सविशेषचमत्कृतीनां**
**सारः प्रकारपरभागविभाव्यमानः ।**
**कर्पूरवेध इव वाङ्मधुगन्धयुक्ते-**
**श्चैत्रासवस्य सहकाररसाधिवासः॥3॥**

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे चमत्कारकथनं तृतीयः संधिः ।**

## 21. i. पाकविवेकः; ii. शय्याविवेकः

### विश्वेश्वरः – चमत्कारचन्द्रिका (IV. 44.50)

अथ पाकविवेकः।

> **पाकं वाचां परीपाकमाहुरास्वादमेदुरम्।**
> **सोऽयं मृदुः खरश्चेति समासेन द्विधा भवेत् ॥**

अत्र मृदुपाको यथा–

> **किं कामेन किमिन्दुना सुरभिणा किं वा जयन्तेन वा**
> **मद्भाग्यादनपोतसिङ्गनृपते रूपं मया वीक्षितम्।**
> **धन्यास्तत्परिचर्ययैव सुदृशो हन्तेति रोमाञ्चिता**
> **स्विद्यद्गण्डतलं सगद्गदपदं साख्याति सख्याः पुरः॥44॥**

अत्र द्राक्षापाक इवाक्लेशेन समास्वाददायी शब्दपरिणामो मृदुपाक इत्युच्यते। सोऽयं प्रायेण सहजसाहित्यरेखासमुल्लेखानां सरसकवीश्वराणामानन्दनिष्यन्दफलेषु प्रबन्धेषु दृश्यते। तथा हि कालिदासस्य 'विवृण्वती शैलसुतापि भावमङ्गै'रित्यादि कुमारसम्भवे। तथा च श्रीहर्षदेवस्य–

> **दुल्लहजणे णुराओ लज्जा गुरुई अ परवसो अप्पा।**
> **पिअसहि विसमं पेम्मं मरणं सरणं णु वरमेक्कम् ॥45॥**

तथा च ममैव–

> **चिक्षेप लक्ष्मीर्निटिले नखाग्रैः**
> **प्रस्वेदवार्या तपमाक्षिपन्ती।**
> **जुगोप देवोऽपि स रोमहर्ष**
> **जडाब्धि वाताहतिकैतवेन ॥46॥**

इति कन्दर्पसम्भवे। एवमन्यत्रापि द्रष्टव्यम्।

खरपाको यथा

> कल्यणेक्षणहेलया प्रकटितस्तम्भप्रतिष्ठाक्रमे
> मन्दाक्षच्छदिसुन्दरे ललितदृक्कोणक्रियातोरणे।
> भावोल्लासविलासके वरतनोरस्या मनोमण्टपे
> श्रीसिङ्गक्षितिपालमूर्तिरि (र?) यते साम्राज्यसिंहासनम् ॥47॥

अत्र नारिकेलपाक इव विमर्शक्लेशेन विलम्ब्यास्वाददायी शब्दपरिणामः खरपाक इत्युच्यते। सोऽयमभ्यस्तकविभूमिकानां वक्रोक्तिवासनावासितान्तःकरणानां विदग्धानां व्युपत्तिमात्रफलेषु लक्ष्यते। तथा हि मुरारेः—

**तदात्वप्रोन्मीलन्म्रदिमरमणीयात्कठिनतां**
**विचिन्त्य प्रत्यङ्गादिव तरुणभावेन नमितौ।**
**स्तनौ सम्विभ्राणाः क्षणविनयवैयात्यमसृण-**
**स्मरोन्मेषाः केषामुपरि सरसानां युवतयः॥48॥**

तथा नैषधकारस्य—

**सर्वाणि रोमाण्यपि बालभावा-**
**द्वरस्त्रियं वीक्षितुमुत्सुकानि।**
**तस्यास्तथा कोरकिताङ्गयष्टेः**
**उद्ग्रीविकादानमिवान्वभूवन् ॥49॥**

तथा तस्यैव—

साधु त्वया तर्कितमेतदेव
स्वेनातलं यत्किल संश्रयिष्ये।
विनामुना स्वात्मनि तु प्रहर्तुम्
मृषा गिरं त्वां नृपतौ न कर्तुम् ॥50॥

एवमन्यत्राप्यनुसन्धेयम्।

इति पाकविवेकः

**ii. शय्याविवेकः**

**शय्या पदानामन्योन्यमैत्री विनिमया सहा।**
**साहित्यस्य पराकाष्ठा शय्या देशविभेदतः ॥**

लोके प्रसिद्धिमि (म?) त्येषा प्राड्ढैश्शय्येति कीर्तिता।

यथा–

**संरम्भादनपोतसिङ्ग्नृपतेर्धाटीसमाटीकने**
**निस्साणेषु धणंधणंधणमिति ध्वानानुसन्धायिषु।**
**मोदन्ते हि रणं रणं रणमिति प्रौढास्तदीया भटाः**
**भ्रान्तिं यान्ति तृणं तृणं तृणमिति प्रत्यर्थिपृथ्वीभुजः ॥51॥**

यथा (च)–

**लीलालोकनलोलुपं मृगकुलं गन्ता गुहान्तानिमा-**
**स्तत्क्रव्यग्रसनव्रतीह भविता द्वीपी रुषोद्दीपितः।**
**याता तन्मृगयारतेर्वनमिदं श्रीसिङ्गभूपोरया-**
**दित्याविर्भयमादिशन्त्यरिनृपास्त्रीणामनीक्षाव्रतम् ॥52॥**

अत्र पदानां पर्यायपदसद्भावेऽपि परिवृत्त्यसहिष्णुत्वादन्योन्यमैत्रीरूपा शय्या।

अत्र रसस्य पृथक्प्रकरणे प्रपञ्चविवक्षया व्युत्क्रम्य वृत्तिपाकशय्यानां स्वरूपं निरूपितम्।

इति शय्याविवेकः।

## iii. रसभावनाविषये चर्चा

### विश्वेश्वरः – चमत्कारचन्द्रिका (v. अन्त्यभागः)

ननु कोऽयमाकारो रसस्य येनायं भावुकमानसैरनुभूयत इति चेत् स्वस्वानुभवैकनिवेदनीये तस्मिन्नाकारे कथमस्मादृशां वाचो व्यापरमात्मीयमापूरयेयुः। न हि क्षीरसागरमागलं पिबन्नपि तं माधुरीविशेषमिदन्तया निर्देष्टुं ब्रह्मापि शक्नोति। किन्तु विगलितवेद्यान्तरत्वमिति वचनपरिपाटीं मनसि मुहुरावर्तयता भावनावृद्धिपर्यन्तं सन्तोष्टव्यमायुष्मता।

ननु—आकाशापूपिकान्यायादसौ रस इति स्फुटम्।
अमीलितदृशां पुंसां नेयं भावकभूमिका ॥

मानाधीना मेयसिद्धिस्सर्वसिद्धान्तसम्मता।
असत्यो रसवादोऽयं रसवाद इतः परम् ॥

न प्रत्यक्षेण लक्ष्योऽयं नानुमानेन मन्यते।
न चागमेन सुगमो नोपमानेन मानितः ॥

समर्थितो नार्थापत्त्या नाभावेन च (भावितः)।
(न सम्भवेन) सम्भाव्यो नैतिह्येन च लिह्यते ॥

इति चेदुच्यते, स्वानुभूतिविलसनमेव रसस्य सद्भावे प्रमाणमिति परमं रहस्यम्। तदेतदनुपदमेव प्रदर्शितम्। अस्यापि पुनरियं वागाडम्बरविडम्बनाविविधचर्चाकण्डूलधिषणाप्रकाण्डानां वादिनां मुदे विलिख्यते।

तथा हि ननु प्रत्यक्षीभवन्नसौ निर्विकल्पकेनावभासते सविकल्पकेन वा ? नाद्यः; वस्तुस्वरूपमात्रावभासकस्वभावत्वान्निर्विकल्पकस्य, रसस्य भुवि भावादिविशेषानुसन्धानपूर्वकप्रतीतिस्वभावत्वात्। निर्विकल्पकपूर्वत्वात्सविकल्पकस्येति चेच्छ्रूयताम्। सविकल्पकेनैवेति ब्रूमः। सविकल्पकस्य निर्विकल्पकपूर्वकत्वाभिधानमविचारितरमणीयमेव, निर्विशिष्टविषयोल्लेखिनो ज्ञानस्यैवासम्भवात्। तथा च शेषावतारविशेषस्य भगवतः पतञ्जलेरभिप्रायं प्रकटयता व्याहृतं हरियोगिना।

**न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥** इति।

अनुमानमपि सामान्यतो दृष्टं रसावभासकतया आत्मनि बहुमानमाकलयति। अमी सामाजिका रसानुभववन्तः, ये ये विवक्षितचेष्टाविशिष्टास्ते ते रसानुभववन्तः। **यथा** तत्त्वसाक्षात्कारानुभवितारः तथा चेमै चेष्टाविशिष्टाः, तस्माद्रसानुभववन्त एवेति।

न च दृष्टान्ते साधनवैकल्यमाशङ्कनौयम् समाधिवेलायामानन्दे बाष्पादिव्यतिकरप्रसिद्धेः। तथा महिम्नःस्तवे–

**मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः**
**प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।**
**यदालोक्याह्लादं ह्रद इव निमज्यामृतमये**
**दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥** इति।

आगमः पुनरनेकसिद्धान्तरहस्ये(स्य) साक्षात्कारिणां यथादृष्टवादिनां पुराणकवीनामलङ्कारसंहिताः। तत्र च रस एव सर्वोत्तरतया प्रतिपाद्यते।

गोसदृशो गवय इतिवत् तत्त्वसाक्षात्कारी(र) सदृशो रस इत्युपमानमपि रससद्भावानुभावनात्मसत्तासाफल्यमनुसन्धत्ते।

अर्थापत्तिरपि निरापत्तिकं समर्थयते रससद्भावम्। यथा दिवा न भुञ्जानस्य देवदत्तस्य पीनत्वानुपपत्त्या कल्पिता नक्तंभुक्तिः, एवं विभावानुभावादेरनुपपत्त्या रस इति।

ननु रसाप्रतीतावपि स्वयमेव क्वचिदास्वाद्यतया स्वतन्त्राणां भावादीनां कानुपपत्तिरिति चेत्, कदाचित् कोऽपि विभावादिषु स्वतन्त्रव्यवहारोपचारमात्रेण राजपुरुषेषु राजव्यवहारवदिति।

सम्भवस्तु वस्तुसंख्या(दि) विषयतया रसमहाराजलक्ष्मीमनालक्षयन् निजदौर्भाग्यमाविर्भावयति।

ऐतिह्यमपि निदर्शितप्रमाणसंवादि न बाह्यम्, नैव रसनिरूपणे बाधमालम्बते।

तदित्थमखिलप्रमाणसंसिद्धे रससुधानिष्प(ष्य)न्दे सुमनोभिरनुभूयमाने योग्यानुपलब्धिलक्षणमभावप्रमाणं रसावमाननैकदुराग्रहाणां विपरीतसाक्षराणां मनसि वैदग्ध्याभावमेको(व) विभासयति। तथा चोक्तमस्मदाचार्यैः काशीश्वरमिश्रै रसमीमांसायाम्—

रसलक्ष्मीमनादृत्य वागाडम्बरतोर(ष ?)णम्।
पुण्ड्रेक्षो रसविद्वेषादृजीषानुभवो यथा ॥

प्रमाणलक्षणादिकमन्यतोऽवगन्तव्यम्।

कवयो लोकसिद्धान्तसिद्धार्थव्यवहारिणः।
अत्रैव हि चमत्कारसाक्षात्कारैकसाक्षिणः॥

अनुक्तानामिहान्येषां लक्ष्यलक्षणविस्तरः।
सिङ्गभूपालरचिते रसार्णवसुधाकरे॥

आदिद्वितीययोस्साधु शीलनीया (यो) विलासयोः।
अन्यत्र बद्धदृष्टित्वादस्माभिर्न प्रपञ्चितः॥

न हि सर्वत्र सर्वेषां विशेषाणां प्रदर्शनम्।
अतिविस्तरदोषेण ग्रन्थोच्छेदप्रसङ्गतः॥

दिङ्मात्रमेव शास्त्रेषु धीमतामुपदिश्यते।
स्वयमेवावभासन्ते विशेषाः परिशीलनात् ॥

इति सकलमपि कल्याणम्।

## 22. रसास्वादः

### अभिनवगुप्तः – अभिनवभारती (VI. रससूत्रव्याख्या)

तस्मात्स्थायिरूपचित्तवृत्तिसूत्रस्यूता एवामी व्यभिचारिणः स्वात्मानमुदयास्तमयवैचित्र्यशतसहस्रधर्माणं प्रतिलभमाना रक्तनीलादिसूत्रस्यूतविरलभावो(गो) पलम्भनसम्भावितभङ्गीसहस्रगर्भस्फटिककाचभ्र(भ्रा) मकपद्मरागमरकतमहानीलादिमयगोलकवत्तस्मिन् सूत्रे स्वसंस्कारवैचित्र्यमनिवेशयन्तोऽपि तत्सूत्रकृतमुपकरासन्दर्भं विभ्रतः स्वयं च विचित्रार्थस्थायिसूत्रं च विचित्रयन्तोऽन्तरान्तरा शुद्धमपि स्थायिसूत्रं प्रतिभासावकाशमुपनयन्तोऽपि पूर्वापरव्यभिचारिरत्नच्छायाशबलिमानमवश्यमानयन्तः प्रतिभासन्त इति व्यभिचारिण उच्यन्ते।

तथा हि–ग्लानोऽयमित्युक्ते कुत इति हेतुप्रश्नेन स्थायी तस्य सूच्यते। न तु राम उत्साहशक्तिमानित्यत्र हेतुप्रश्नमाहुः। अत एव विभावास्तत्रोद्बोधकाः सन्तः स्वरूपोपरञ्जकत्वं विदधाना रत्युत्साहादेरुचितानुचितत्वमात्रमावहन्ति। न तु तदभावे सर्वथैव ते निरुपाख्याः। वासनात्मना सर्वजन्तूनां तन्मयत्वेनोक्तत्वात्। व्यभिचारिणां तु स्वविभावाभावे नामापि नास्तीति। वितनिष्यते चैतद्यथायोगं व्याख्यावसरे। एवमप्रधानत्वनिरासः स्थायिनिरूपणायां "स्थायिभावनान् रसत्त्वम् (**ना. शा.** अ.6) इत्यनया सामान्यलक्षणशेषभूतया विशेषलक्षणनिष्ठया च कृतः।

तत्रानुभावानां विभावानां व्यभिचारिणां च पृथक्स्थायिनि नियमो नास्ति। बाष्पादेरानन्दाक्षिरोगादिजत्वदर्शनात्। व्याघ्रादेश्च क्रोधभयादिहेतुत्वात्। 'भ्र (श्र) मचिन्तादेरुत्साहभयाद्यनेकसहचरत्वालोकन'''' व्यभिचारिणी। तथा हि–बन्धुविनाशो यत्र विभावः परिदेविताश्रुपातादिस्त्वनुभावः चिन्तादैन्यादिर्व्यभिचारी सोऽवश्यं शोक एवे (व वे) त्येवं संशयोदये शङ्कात्मकविघ्नशमनाय संयोग उपात्तः।

तत्र लोकव्यवहारे कार्यकारणसहचारात्मकलिङ्गदर्शने स्थाय्यात्मपरचित्तवृत्त्यनुमानाभ्यासपाटवादधुना तैरेवोद्यानकटाक्षवीक्षादिभिर्लौकिकीं कारणत्वादिभुवमतिक्रान्तैर्विभावनानुभावनासमुपरञ्जकत्वमात्रप्राणैः, अत

एवालौकिकविभावादिव्यपदेशभाग्भिः प्राच्यकारणदिरूपसंस्कारोपजीवनख्यापनाय विभावादिमधेयव्यपदेश्यैर्भावाध्यायेऽपि वक्ष्यमाणस्वरूपभेदैर्गुणप्रधानतापर्यायेण सामाजिकधियि सम्यग्योगं सम्बन्धमैकाग्र्यं वाऽऽसादितवद्भिरलौककिनिर्विघ्नसंवेदनात्मकचर्वणागोचरतां नीतोऽर्थश्चर्यमाणतैकसारो न तु सिद्धस्वभावः तात्कालिक एव न तु चर्वणातिरिक्तकालावलम्बी स्थायिविल(यिल) क्षण एव रसः। ननु (न तु) यथा **शङ्कुकादि**भिरभ्यधीयत, "स्थाय्येव विभावादिप्रत्याय्यो रस्यमानत्वाद्रस उच्यते।" इति। एवं हि लौकिकोऽपि किं न रसः। असतोऽपि हि यत्र रसनीयता स्यात्तत्र वस्तुसतः कथं न भविष्यति। तेन स्थायिप्रतीतिरनुमितिरूपा प्राच्या (प्या)। न रसः। अत एव सूत्रे स्थायिग्रहणं न कृतम्। तत्प्रत्युत शल्यभूतं स्यात्। केवलमौचित्यादेवमुच्यते स्थायी रसीभूत इति। औचित्यं तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावादित्वावलम्बनात्।

तथा(दा)हि लौकिकचित्तवृत्त्यनुमाने का रसता। तेनालौकिकचमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिक संवेदनविलक्षण एव।

तथाहि—लौकिकेनानुमानेन संस्कृतः प्रमदादिना (दि न) ताटस्थ्येन प्रतिपद्यते। अपि तु हृदयसंवादात्मकसहृदयत्वबलात्पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मृत्यादिसोपानमारुह्येव तन्मयीभावोचितचर्वणाप्राणतया। न च सा चर्वणा प्राङ्मानान्तरात् येनाधुना स्मृतिः स्यात्। न चात्र लोकिकप्रत्यक्षादिप्रमाणव्यापारः। किन्त्वलौकिकविभावादिसंयोगबलोपनतैवेयं चर्वणा। सा च प्रत्यक्षानुमानागमोपमानादिलौकिकप्रमाणजनितरत्याद्यवबोधतः तथा योगिप्रत्यक्षजनिततटस्थपरसंवित्तिज्ञानात्सकलवैषयिकोपरागशून्यशुद्धपरयोगिगतस्वात्मानन्दैकघनानुभवाच्च विशिष्यते। एतेषां यथायोगमर्जनादिविघ्नान्तरोदयात्ताटस्थ्येऽस्फुटत्वविपयावेश वैवश्यकृतसौन्दर्यविरहात्। अत्र तु स्वात्मैकगतत्वनियमासंभवात् (न विषयावेशवैवश्यम्) स्वानुप्रवेशात्परगतत्वनियमाभावात् (न ताटस्थ्यास्फुटत्वं) तद्विभावादिसाधारण्यवशसंप्रबुद्धोचितनिजरत्यादिवासनावेशवशाच्च न विघ्नान्तरादीनां सम्भव इत्यवोचाम बहुशः। अत एव विभावादयो न निष्पत्तिहेतवो रसस्य। तद्बोधापगमेऽपि रससंभवप्रसङ्गात्। नापि

ज्ञप्तिहेतवः येन प्रमाणमध्ये पतेयुः। सिद्धस्य कस्यचित्प्रमेयभूतस्य रसस्याभावात्। किं तर्ह्येतद्धि विभावादय इति। अलौकिक एवायं चर्वणोपयोगी विभावदिव्यवहारः। क्वान्यत्रेत्थं दृष्टमिति चेद्भूषणमेतद-स्माकमलौकिकत्वसिद्धौ। पानकरसास्वादोऽपि किं गुडमरीचादिषु दृष्ट इति समानमेतत्।

नन्वेवं रसोऽप्रमेयः स्यादेवम्। युक्तं भवितुमर्हति। रस्यतैकप्राणो ह्यसौ न प्रमेयादिस्वभावः। तर्हि सूत्रे निष्पत्तिरिति कथम्। नेयं रसस्य। अपि तु तद्विषयरसनायाः। तन्निष्पत्त्या तु यदि तदेकायत्तजीवितस्य रसस्य निष्पत्तिरुच्यते न कश्चिदत्र दोषः। सा च रसना न प्रमाणव्यापारो न कारकव्यापारः। स्वयं तु नाप्रामाणिकः। स्वसंवेदनसिद्धत्वात्। रसना च बोधरूपैव। किन्तु बोधान्तरेभ्यो लौकिकेभ्यो विलक्षणैव। उपायानां विभावादीनां लौकिकवैलक्षण्यात्। तेन विभावादिसंयोगाद्रसना यतो निष्पद्यतेऽतस्तथाविधरसनागोचरो लोकोत्तरोऽर्थो रस इति तात्पर्यं सूत्रस्य।

अयमत्र संक्षेपः। मुकुटप्रतिशीर्षकादिना तावन्नटबुद्धिराच्छाद्यते। गाढप्राक्त-नसंवित्संस्काराच्च काव्यबलानीयमानापि न तत्र रामधीर्विश्राम्यति। अत एवोभयदेशकालत्यागः। रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टास्तत्रापि लौकिका (त्रावलोकिता) देशकालनियमेन तत्र रतिं गमयन्ति। यस्यां स्वात्माऽपि तद्वासनावत्त्वादनुप्रविष्टः। अत एव न तटस्थतया रत्यवगमः। न च नियतकारणतया। येनार्जनाभिषङ्गादिसम्भावना। न च नियतपरात्मैकगततया। येन दुःखद्वेषाद्युदयः। तेन साधारणीभूता सन्ता-नवृत्तेरेकस्या एव वा संविदो गोचरभूता रतिः शृङ्गारः। साधारणी (भावना च) विभावादिभिरिति। तत्र विभावप्राधान्यस्य धामणिमया (प्राधान्येन साधारणीभावो यथा—)

केलीकन्दलितस्य विभ्रममधो (:) धुर्यं वपुस्ते दृशो-
भंङ्गी भङ्गुरकामकार्मुकमिदं भ्रूर्नर्मकर्मक्रमः।
आपाते (घ्रातो)ऽपि विकारकारणमहो वक्त्राम्बुजन्माऽऽसवः
सत्यं सुन्दरि वेधसस्त्रिजगतीसारः त्वमेका कृतिः॥



अत्र च विभावकृतं तत्सौन्दर्यं प्राधान्येन भाति। तदनुगतत्वेन केलीविभ्रमभङ्गुरनर्मवचोमहिम्ना चानुभाववर्गो भङ्गीक्रमविकारादिशब्दबलाच्च व्यभिचारिवर्गः प्रतिभातीत्यत एव नास्फुटत्वाशङ्काऽत्र रत्यास्वादमये शृङ्गारे विधेया।

अनुभावप्राधान्यं यथा शुद्धसारस्वतप्रवाहपवित्रसकलवाङ्मयमहार्णवपूर्णभावसंपादनात् द्विजराजस्येन्दुराजस्य–

**यद्विश्रम्य विलोकितेषु बहुशो निस्थेमनी लोचने**
**यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत्।**
**दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः**
**कृष्णे यूनि सयौवनासु वनितास्वेषैव वेपस्थितिः॥** इति।

अत्र विश्रम्येति बहुश इति प्रतिदिनमिति च पदसमर्पितो व्यभिचारिगणः कृष्ण इत्यादिपदार्पितश्च विभावो गुणत्वेन प्रतिभासते। विश्रान्तिलक्षणस्तम्भविलोकनवैचित्र्यगात्रतानवतारतम्यपुलकवैवर्ण्यप्रभृतिस्त्वनुभावसञ्चयः प्रधानतया। व्यभिचारिणां तु प्राधान्यं तद्विभावानुभावप्राधान्यकृतम्। तत्राद्यम्। यथा महाकवेः **कालिदासस्य (कलशकस्य)**–

**आत्तमात्तमधिकान्तमी(मु) क्षितुं कातरा शफरशङ्किनी जहौ।**
**अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम्॥**

इत्यत्र सुकुमारप्रमदाजनभूषणभूतस्य व्यभिचारिवर्गस्य वितर्कत्रासशङ्कादेः प्राधान्यं तद्विभावानां प्राधान्यादि (त्) सौन्दर्यातिशयकृतम्। आत्तमित्याद्यर्पितानुभाववर्गस्तु तदनुयायी।

## 23. रसिकस्य चेतसः संभेदाः

### धनञ्जयः – दशरूपकम् (IV. 43-44)

कथं च काव्यात्स्वादोद्भूतिः किमात्मा चासाविति व्युत्पाद्यते–

**स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।**
**विकाशविस्तरक्षोभविक्षेपैः स चतुर्विधः॥43॥**

**शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ।**
**हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ॥44॥**

अतस्तज्जन्यता तेषामत एवावधारणम् ।

काव्यार्थेन विभावादि संसृष्टस्थाय्यात्मकेन भावकचेतसः संभेदेऽन्योन्यसंचलने प्रत्यस्तमितस्वपरविभागे सति प्रबलतरस्वानन्दोद्भूतिः स्वादः। तस्य च सामान्यात्मकत्वेऽपि प्रतिनियतविभावादिकारणजन्यत्वेन संभेदेन चतुर्धा चित्तभूमयो भवन्ति। तद्यथा–शृङ्गारे विकासः, वीरे विस्तरः, बीभत्से क्षोभः, रौद्रे विक्षेप इति। तदन्येषां चतुर्णां हास्याद्भूतभयानककरुणानां स्वसामग्रीलब्धपरिपोषाणं त एव चत्वारो विकासाद्याश्चेतसः संभेदाः। अत एव–

*शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः ।*
*वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः॥*

इति। हेतुहेतुमद्भाव एव संभेदापेक्षया दर्शितो न कार्यकारणभावाभिप्रायेण तेषां कारणान्तरजन्यत्वात्।

*शृङ्गारानुकृतिर्या तु स हास्य इति कीर्तितः ।*

इत्यादिना विकासादिसंभेदैकत्वस्यैव स्फुटीकरणादवधारणमप्यत एवाष्टाविति संभेदानां भावात्। ननु च युक्तं शृङ्गारवीरहास्यादिषु प्रमोदात्मकेषु वाक्यार्थसंभेदादानन्दोद्भव इति। करुणादौ तु दुःखात्मकत्वे कथमिवासौ प्रादुष्यात्। तथाहि। तत्र करुणात्मककाव्यश्रवणाद्दुःखाविर्भावोऽश्रुपातादयश्च रसिकानामपि प्रादुर्भवन्ति। न चैतदानन्दात्मकत्वे सति युज्यते। सत्यमेतत्। किंतु तादृश एवासावानन्दः सुखदुःखात्मको यथा प्रहरणादिषु संभोगावस्थायां

कुट्टमिते स्त्रीणामन्यश्च लौकिकात्करुणात्काव्यकरुणः। तथाह्यत्रोत्तरोत्तरा रसिकानां प्रवृत्तयः। यदि वा लौकिककरुणवद्दुःखात्मकत्वमेवेह स्यात्तदा न कश्चित्तत्र प्रवर्तेत। ततः कारुण्यैकरसानां रामायणादिमहाप्रबन्धानामुच्छेद एव भवेदश्रुपातादयश्चेति वृत्तवर्णनाकर्णनेन विनिपातितेषु लौकिकवैक्लव्यदर्शनादिवत्प्रेक्षकाणं प्रादुर्भवन्तो न विरुध्यन्ते। तस्माद्रसान्तरवत्करुणस्याप्यानन्दात्मकत्वमेव।

## 24. रसनिष्पत्तिविषये विवरणभेदाः, रसभावाश्च

### मम्मटः – काव्यप्रकाशः (IV. 24-36)

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालंकाराणां स्वरूपमभिधानीयं तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदान् आह–

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ।**
**अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥24॥**

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र स 'ध्वनौ' इत्यनुवादात् ध्वनिरिति ज्ञेयः। तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम्। यथा

*त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।*
*आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥23॥*

अत्र वचनादि उपदेशादिरूपतया परिणमति।

क्वचिदनुपपद्यमानतया अत्यन्तं तिरस्कृतम्। यथा–

*उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।*
*विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥24॥*

एतद् अपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति॥

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।**

अन्यपरं व्यङ्ग्यनिष्ठम् ॥ एष च

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥25॥**

अलक्ष्येति। न खलु विभावानुभावव्यभिचारिण एव रसः। अपि तु रसस्तैः इत्यस्ति क्रमः। स तु लाघवान्न लक्ष्यते॥

अत्र

**रसभावतदाभासभावशान्त्यादिरक्रमः।**
**भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः॥26॥**

आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि। प्रधानतया यत्र स्थितो रसादिस्तत्रालंकार्यः यथोदाहरिष्यते। अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्विसमाहितादयोऽलंकाराः। ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते ॥

तत्र रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाटयकाव्ययोः॥27॥**

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥28॥**

उक्तं हि भरतेन "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति।

एतद्विवृण्वते—"विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतासंधानान्नर्तकेऽपि प्रतीयमानो रसः" इति भट्टलोल्लटप्रभृतयः।

राम एवायम् अयमेव राम इति 'न रामोऽयम्' इत्यौत्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा न वायमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे

*सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।*
*मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥25॥*

*दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च।*
*अविरलविलोलजलदः कालः समुपागतश्चायम्॥26॥*

इत्यादिकाव्यानुसंधानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैर्विभा-वादिशब्दव्यपदेश्यैः 'संयोगात्' गम्यगमकभावरूपात् अनुमीयमानोऽपि

वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।

न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते इति भट्टनायकः।

लोके प्रमदाभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति संबन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतवेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः। स च न कार्यः। विभावादिविनाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न क्वचिद्दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्। तद्ग्राहकं च न निर्विकल्पकं विभावादिपरामर्शप्रधानत्वात् नापि सविकल्पकं चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्य

चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः॥

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम् अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।

*वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः।*
*धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे॥27॥*

इत्यादौ

*परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः।*
*कथमपि परिवारप्रार्थनाभिः क्रियासु।*
*कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-*
*मभिनवकरिदन्तच्छेदकान्तः कपोलः॥28॥*

इत्यादौ

*दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं*
*संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलतम्।*
*मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं*
*चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥29॥*

इत्यादौ च

यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः, तथ्याप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ॥

तद्विशेषानाह—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥29॥

तत्र शृङ्गारस्य द्वौ भेदौ। संभोगो विप्रलम्भश्च। तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यन्तत्वादपरिच्छेद्य एक एव गण्यते। यथा

*शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-*
*र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।*
*विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं*
*लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥30॥*

तथा—

*त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं*
*लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।*
*शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो*
*निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥31॥*

अपरस्तु—अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः। क्रमेणोदाहरणम्—

*प्रमार्द्राः प्रणयस्पृशः परिचयादुङ्गाढरागोदया-*
*स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।*
*यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-*
*दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥32॥*

*अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्*
*यो मां नेच्छति नागतश्च हहहा कोयं विधेः प्रक्रमः।*
*इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे*
*बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रा निशि ॥33॥*

एषा विरहोत्कण्ठिता।—

*सा पत्युः प्रथमापराधसमये सख्योपदेशं विना*
*नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।*
*स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला*
*बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥34॥*

प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥35॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्त्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥36॥

हास्यादीनां क्रमेणोदाहरणम्—

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।
तारस्वनं प्रथितथूत्कमदात्प्रहारं
हाहा हतोऽहमिति रोदिति विष्णुशर्मा ॥37॥

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥38॥

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥39॥

क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेष्वयामि ॥40॥

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।

*दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा*
*पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥41॥*

*उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-*
*न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्यग्रपूतीनि जग्ध्वा।*
*आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-*
*दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥42॥*

*चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः।*
*लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः॥43॥*

एषां स्थायिभावानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥30॥**

स्पष्टम्॥

व्यभिचारिणो ब्रूते—

**निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः।**
**आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥31॥**

**व्रीडा चपलता हर्ष आवेगो जडता तथा।**
**गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥32॥**

**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥33॥**

**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥34॥**

निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयऽत्वेप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम्। तेन

**निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।**

यथा

*अहौ वा हारे वा कुसुमशयने वा दृषदि वा*
*मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा।*
*तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः*
*क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः॥44॥*

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः॥35॥**
**भावः प्रोक्तः**

आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया। कान्ताविषया तु व्यक्ता शृङ्गारः।

उदाहरणम्

*कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।*
*अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥45॥*

*हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।*
*शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥46॥*

एवमन्यदप्युदाहार्यम्।

अञ्जितव्यभिचारी यथा

*जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया*
*मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।*
*नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां*
*भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥47॥*

अत्र विधिं प्रत्यसूया।

**तदाभासा अनौचित्यप्रवर्तिताः।**

तदाभासा रसाभासा भावाभासाश्च।

तत्र रसाभासो यथा

*स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे*
*विलेभे कः प्राणान् रणमखमुखे यं मृगयसे।*

*सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्*
*तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥48॥*

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति।

भावाभासो यथा

*राकासुधाकरमुखी तरलायताक्षी*
*सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।*
*तत् किं करोमि विदधे कथमत्र मैत्रीं*
*तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥49॥*

अत्र चिन्ता अनौचित्यप्रवर्तिता। एवमन्येऽप्युदाहार्याः॥

**भावस्य शान्तिरुदयः संधिः शवलता तथा ॥36॥**

क्रमेणोदाहरणम्

*तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं*
*किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।*
*इत्युक्ते क्व तदित्युदीर्य सहसा तत् संप्रमार्ष्टुं मया*
*साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥50॥*

अत्र कोपस्य

*एकस्मिन्न् शयने विपक्षरमणीनामग्रहे मुग्धया*
*सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।*
*आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं*
*मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥51॥*

अत्रौत्सुक्यस्य

*उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः*
*सत्संगप्रियता च वीररभसोत्फालश्च मां कर्षतः।*
*वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्*
*आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्धयन्यतः॥52॥*

अत्रावेगहर्षयोः

*क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा*
*दोषाणां प्रशमाय न श्रुतमहो कोपेऽपि कान्तं मुखम्।*
*किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा*
*चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥83॥*

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता।

## 25. रसानां सुखदुःखात्मकत्वम्

### रामचन्द्रगुणचन्द्रौ–नाट्यदर्पणम् (III. 7 F)

अथ 'रस-भावाभिनयगाः' इत्यतो वृत्तिलक्षणात् प्रथमं रसानाचष्टे–

**स्थायी भावः श्रितोत्कर्षो, विभाव-व्यभिचारिभिः।**
**स्पष्टानुभावनिश्चेयः, सुंख-दुःखात्मको रसः॥7॥**

प्रतिक्षणमुदय-व्ययधर्मकेषु बहुष्वपि व्यभिचारिष्वनुयायितयाऽवश्यं तिष्ठतीति **स्थायी**। यद्वा तद्भाव-एव भावात्, अभावे वा भावाद् रत्यादिर्व्यभिचारिणं ग्लान्यादिकं प्रत्यवश्यं **स्थायी**। उपचयं प्राप्य रसरूपेण रत्यादिर्भवतीति **भावः**। **विभावै**र्ललनोद्यानादिभिरालम्बनोद्दीपनरूपैर्बाह्यैर्हेतुभिः सत एवाविर्भावाद्, **व्यभिचारिभि**र्ग्लान्यादिभी रसिकमनः – शरीरवर्तिभिः परिपोषणाच्च **श्रितोत्कर्षः**। स्वीकृतसाक्षात्कारित्वानुभूयमानावस्थो यथासम्भवं **सुखं-दुःख-**स्वभावो रस्यते आस्वाद्यत इति **रसः**। तत्रेष्टविभावादिप्रथितस्वरूपसम्पत्तयः शृङ्गार-हास्य-वीराद्भुत-शान्ताः पञ्च सुखात्मानोऽपरे पुनरनिष्टविभावद्युपनीतात्मानः करुण-रौद्र-बीभत्स-भयानकाश्चत्वारो दुःखात्मानः। यत् पुनः सर्वरसानां सुखात्मकत्वमुच्यते, तत् प्रतीतबाधितम् आस्तां नाम मुख्यविभावोपचितः काव्याभिनयोपनीतविभावोपचितोऽपि भयानको बीभत्सः करुणो रौदो वा रसास्वादवतामनाख्येयां कामपि क्लेशदशासुपनयति। अत एव भयानकादिभिरुद्विजते समाजः। न नाम सुखास्वादादुद्वेगो घटते। यत् पुनरेभिरपि चमत्कारो दृश्यते, स रसास्वादविरामे सति यथावस्थितवस्तुप्रदर्शकेन कवि-नट-शक्ति-कौशलेन। विस्मयन्ते हि शिरश्छेदकारिणाऽपि प्रहारकुशलेन वैरिणा शौण्डीरमानिनः। अनेनैव च सर्वाङ्गाह्लादकेन कवि-नट-शक्तिजन्मना चमत्कारेण विप्रलब्धाः परमानन्दरूपतां दुःखात्मकेष्वपि करुणादिषु सुमेधसः प्रतिजानते। एतदास्वादलौल्येन प्रेक्षका अपि एतेपु प्रवर्तन्ते। कवयस्तु सुख-दुःखात्मकसंसारानुरूप्येण रामादिचरितं निबध्नन्तः सुख-दुखात्मकरसानुविद्धमेव ग्रथ्नन्ति। पानकमाधुर्यमिव च तीक्ष्णास्वादेन दुःखास्वादेन सुतरां सुखानि स्वदन्ते इति। अपि च सीताया हरणम्, द्रौपद्याः कचाम्बराकर्पणम्, हरिश्चन्द्रस्य चाण्डालदास्यम्, रोहिताश्वस्य

मरणम्, लक्ष्मणस्य शक्तिभेदनम्, मालत्या व्यापादनारम्भणमित्याद्यभिनीयमानं पश्यतां सहृदयानां को नाम सुखास्वादः ? तथाऽनुकार्यगताश्च करुणादयः परिदेवितानुकार्यत्वात् तावद् दुःखात्मका एव। यदि चानुकरणे सुखात्मानः स्यु+र्न सम्यगनुकरणं स्यात्, विपरीतत्वेन भासनादिति। योऽपीष्टादिविनाशदुःखवतां करुणे वर्ण्यमानेऽभिनीयमाने वा सुखास्वादः, सोऽपि परमार्थतो दुःखास्वाद एव। दुःखी हि दुःखितवार्तया सुखमभिमन्यते, प्रमोदवार्तया तु ताम्यतीति करुणादयो दुःखात्मान एवेति। विप्रलम्भशृङ्गारस्तु दाहादिकार्यत्वाद् दुःखरूपोऽपि सम्भोगसम्भावनागर्भत्वात् सुखात्मकः। रसश्च मुख्यलोकगतः, प्रेक्षकगतः, काव्यस्य श्रोत्रनुसन्धायकद्वयगतो वेति। 'स्पष्टा–' इति स्पष्टाः सम्यग् निर्णीताः। असन्दिग्धं हि लिङ्गं भवति। अनुभावयन्ति परस्थानपि रसानवबोधयन्तीत्यनुभावाः स्तम्भ-स्वेदाश्रु- रोमाञ्च भ्रूक्षेपादयस्तैर्यथासम्भवं सत्तया निश्चेयः। इह तावत् सर्वलोकसिद्धा परस्थस्य रसस्य प्रतिपत्तिः। सा च न प्रत्यक्षा चेतोधर्माणामतीन्द्रियत्वात्, तस्मात् परोक्षैव। परोक्षा च प्रतिपत्तिरविनाभूताद् वस्त्वन्तरात्। अत्र च रसे अन्यस्य वस्त्वन्तरस्यासम्भवात् कार्यमेवाविनाकृतं परगतविभावाद्यनुक्रियायां च पररञ्जनार्थं प्रवृत्तस्य नटस्य रसाभावेऽपि स्तम्भ-स्वेदादयो भवन्तीति। नैषां रसनान्तरीयकत्वमाशङ्कनीयम्। तेषां परगतरसजनकत्वेनाकार्यत्वात्, नटगता हि स्तम्भादयः प्रेक्षकगतरसानां कारणम्, प्रेक्षकगतास्तु कार्याणि। परोक्षं चार्थं बुभुत्सुना परोक्षार्थनान्तरीयके लिङ्गस्वरूपे निपुणेन प्रतिपत्त्रा भाव्यम्। नटेऽपि च रसं गमयन्त्येव यदा रसकार्या भवन्ति, न च नटस्य रसो न भवतीत्येकान्तः। पण्यस्त्रियो हि धनलोभेन परत्यर्थं रतादि विपञ्चयन्त्यः कदाचित् स्वयमपि परां रतिमनुभवन्ति। गायनाश्च परं रञ्जयन्तः कदाचित् स्वयमपि रज्यन्ते। एवं नटोऽपि रामादिगतं विप्रलम्भाद्यनुकुर्वाणः कदाचित् स्वयमपि तन्मयीभावमुपयात्येवेति। तद्गता अपि रोमाञ्चादयस्तत्र रसं गमयेयुरेव। अत एव 'स्पष्टानुभाव–' इत्युक्तम्। रोमाञ्चादयश्च ये स्त्री-पुंस-काव्यस्थास्ते परेषां रसजनकत्वात् विभावमध्यवर्तिनः। प्रेक्षक श्रोत्रनुसन्धात्रादिस्थितास्तु रसस्य कार्याणि सन्तो व्यवस्थापकाः। तत्र विभावाः परमार्थेन सन्तः प्रतिनियतविषयमेव स्थायिनं रसत्वमापादयन्ति। तत्र नियतविषयोल्लेखी रसास्वादप्रत्ययः। युवा हि रागवतीं युवतिमवलम्ब्य तद्विषयामेव रतिं

शृङ्गारतयाऽऽस्वादयति। यत्र तु परानुरक्तां वनितामवलम्ब्य सामान्यविपया रतिरुपचयमुपैति, तत्र न नियतविपयः शृङ्गाररसास्वादः, विभावानां सामान्यविपये स्थाय्याविर्भावकत्वात्। बन्धुशोकार्ता च रुदतीं स्त्रियमवलोक्य सामान्यविषय एव करुणरसास्वादः। एवमन्येष्वपि रसेपु विशेष-सामान्यविपयत्वं द्रष्टव्यम्।

## 26. भावाः, रसाभासादसश्च

### विद्याधरः- एकावली (III. अन्त्यम्)
### (व्याख्याकारः– मल्लिनाथः)

**भावो यथा।**

भाावो हि नाम देवद्विजगुरुपुत्रमित्रादिविषया रतिर्विभावाद्यापूरितो व्यभिचारी च कान्ताविषयाया रतेः शृङ्गारत्वेनाङ्गीकारात्। तत्र देवविपया यथा।

**छिन्ते ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि**
**क्षीबः क्रीडति मातृभिर्यदि रतिं धत्ते स्मशाने यदि।**
**सृष्ध्वा संहरति प्रजा यदि तथापाधाय भक्त्या मन-**
**स्तं सेवे करवाणि किं त्रिजगती शून्या स एवेश्वरः॥**

अत्र भगवद्विपया रतिः प्रतीयते। एवं द्विजातिविपयाप्युदाहार्या। पुत्र-विषया तु रतिर्वत्सलो रस इति कैश्चिदुच्यते॥

यद्यपि सकलमेव काव्यं रसेनैव जीवति रसश्चैकघनचमत्कारात्मा तथापि क्वापि व्यभिचारिणः सकाशादधिकश्चमत्कारो भवतीति सोऽपि विभावा-नुभावप्रकाशितो भाव उच्यते।

---

नन्वेते विभावाः श्लोकेनोक्ता इत्याशङ्क्याह। **विभावस्त्विति**। कौपीनधारणादिकार्योन्नेया इत्यर्थः.। ननु शृङ्गारादीनामवान्तरभेदाः किमिति नोदाह्रिवन्तेऽत आह। **शृङ्गारादीति**। अस्माकं त्वेतावतैव ध्वनिस्वरूपनिरूपणसिद्धेरलमिति भावः **मित्रादीत्यादि**। आदिशब्दा-द्वर्ण्यनृपादिसंग्रहः। आपूरित उपचित इत्यर्थः। **एवं द्विजातीति**। तत्र द्विजविषये 'अद्य क्रियाः कामदुग्धाः क्रतूनाम्' इत्यादि। गुरुविषये **रघुवंशे** 'ससैन्यश्चान्वगाद्रामम्' इत्यादि रामे राज्ञि भरतवृत्तान्तः। पुत्रविषये 'आलक्ष्यदन्तमुकुलान्' इत्यादि **शाकुन्तले**। मित्रविपये तु 'अद्वैतं सुखदुःखयोरनुगतम्' इत्यादिकं चोदाहार्यमित्यर्थः। आदिशब्दाद्वर्ण्यनृपतिविषया ग्राह्याः। तत्र स्वचाटुश्लोक एवोदाहरणमिति भावः। पुत्रविषयारतिर्वत्सलोनाम दशमो रस इति केचित्। न तत्स्वमतमित्याशयेनाह। **कैश्चिदिति**। तस्याः पृथग्रसत्वे देवद्विजादिविषयाणामपि पृथग्रसत्वप्रसङ्ग इति भावः। ननु रसस्य लोकोत्तरचमत्कारकारि-त्वाद् ध्वनित्वमस्तु वयभिचारिणः कथं तथात्वमिति शङ्कामनूद्य विभावादिमहिम्ना कदाचित् सोऽपि तयेत्याह। **यद्यपीति**। किं तस्य रसत्वमपि नेत्याह। **भाव उच्यत** इति।

यथा

**किमसुभिर्गलितैर्जड मन्यसे**
**मयि निमज्जतु भीमसुतामनः।**
**मम किल श्रुतिमाह तदर्थिकां**
**नलमुखेन्दुपरां विबुधः स्परः॥**

अत्र शशिनं प्रत्यसूया दमयन्त्याः प्रतीयतेऽतिरेकेणेति विप्रलम्भेऽप्यसूयाख्यव्यभिचारिचमत्क्रियाप्रयुक्त आस्वादतिशयः॥

रसाभासो यथा।

**'ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां**
**स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः।**
**वीणां संहर नारद स्तुतिकथालापैरलं तुम्बरो**
**सीतायल्लकभल्लमाग्नहृदयः स्वस्थो न लङ्केश्वरः॥**

---

**किमित्यादि।** गलितैरुत्क्रामितैः। तदर्थिकां मृतमनसां चन्द्रमसि विलय इत्येवमर्थपरामित्यर्थः। इह विरहवेदनया चन्द्रातपमसहमाना दमयन्ती चन्द्रमुपालभते। एषा मृता मयि मग्नमना भविष्यति। 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते' इति श्रुतिप्रामाण्यादिति यदि तेऽभिमानस्तदपि 'व्याख्यानतो विशेषप्रतिपत्तिः, इति न्यायेन विद्वत्कामदेवव्याख्यानान्नलमुखेन्दुपरमेव श्रुतेरिति हताशो भवानित्यर्थः। एतेनेह नलैकपराया मम परत्रापि तत्सायुज्यमेवेति व्यज्यते तेन रतेः स्थायित्वं चेति स्थिते सत्याह। **अत्रेति।** अपकारिणि चन्द्र मन्युप्रयुक्ता तत्पाण्डित्यासहनरूपासूयेर्ष्यापराख्यो भावो व्यज्यत इत्यर्थः। 'परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि वा' इति लक्षणम्। अत्र विप्रलम्भप्रतीते रसध्वनौ जृम्भमाणे कुतो भावध्वनिरित्याशङ्क्य तत्संभवेऽप्युद्भटत्वादयमुद्भाव्य इत्याह। **अतिरेकेणेति।** अत्र परकीयापकारादयो विभावा निन्दानादरभ्रूभङ्गादयोऽनुभावा इत्यनुसंधेयम्॥

**ब्रह्मन्निति।** सीतायल्लकः सीताविरहः। अत्र रावणस्य सीतायां विप्रलम्भकारः प्रतीयते। अस्याभासत्वं व्यनक्ति। **अत्रेति।**

'एकत्रैवानुरागश्चेत् तिर्यङ्म्लेच्छगतोऽपि वा।
योषितो बहुसक्तिश्चेद्रसाभसस्त्रिधा मतः॥'

इत्युक्तत्वात् तिर्यग्गतोऽपि रसभास इति केचित्। तन्मतमुपन्यस्य निरस्यति। **अपरेत्विति।** तिरश्चां विभावादिसंभवेऽपि तदनुसंधानवैधुर्यात्र रसाश्रयत्वमिति शङ्कते। **विभावदिज्ञानेति।**

अत्र न कथमपि मिथिलाधिराजतनयायाः प्रेमभाजनं भवति रामभद्रेतरस्ततः सर्वथा तस्यामनौचित्येन रतिः प्रावर्त्तत रावणस्य रसाभासः समजनि विप्रलम्भशृङ्गारः। इदमत्र तात्पर्यम्। यत्र परस्परानुकूल्यकल्लोलितः प्रवर्त्तते स्थायी तत्र रसः। यत्र पुनरेकतरानुरागस्तत्र स्थायिनोऽनौचित्येन प्रवृत्तत्वात् तदाभास एव। अपरे तु रसाभासं तिर्यक्षु प्रचक्षते तन्न परीक्षाक्षमम्। तेष्वपि विभावादिसंभवात्। विभवादिज्ञानशून्यास्तिर्यञ्चो न भाजनं भवितुमर्हन्ति रसस्येति चेन्न। मनुष्येष्वपि केषुचित्तथाभूतेषु रसविषयभावाभावप्रसङ्गात्। विभावादिसंभवो हि रसं प्रति प्रयोजको न विभावादिज्ञानम्। ततश्च तिरश्चामप्यस्त्येव रसः।

यथा

**ददौ सरःपङ्कजरेणुगन्धि**
**गजाय गण्डूषजलं करेणुः।**
**अर्धोपभुक्तेन विसेन जायां**
**संभावयामास रथाङ्गनामा॥**

अत्र गजेनालम्बनविभावेन जनिता वसन्तादिभिरुद्दीपनविभावैरुद्दीपिता सुरभिगण्डूषजलदानानुभावप्रकाशिता हर्षादिभिर्व्यभिचारिभिरुपचिता करेणोः संभोगशृङ्गारितां प्रतिपन्नैव रतिः। एवं रथाङ्गविषयापि॥

भावाभासो यथा।

**अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय-**
**प्रह्वीभूतसुरासुराणि भवतो भूमेः सुरता शृण्वती।**
**पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्यास्यति**
**स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम्॥**

अत्र रावणस्यौत्सुक्यमनौचित्येन प्रवृत्तम्॥

---

समाधत्ते। नेति। कुत इत्याशङ्क्य किमेषां विभावादितत्वेन ज्ञानं प्रयोजकं स्वरूपमात्रज्ञानं वेति विकल्प्याद्यं प्रतिबन्द्या समाधत्ते। **मनुष्येष्वपीति**। रसविषयभावो रसाश्रयत्वम्। द्वितीयं त्वत्राप्यस्तीत्याशयेनाह। **विभावादिति**। संभवः स्वरूपज्ञानसंभवः न विभावादिज्ञानं विभावादय इति विशेषज्ञानमित्यर्थः। अन्यथा ज्ञानमात्रनिषेधेऽत्यन्तानुपलभ्यमानानामपि तच्चेष्टादीनामुद्दीपकत्वाप्रसङ्गः। उपसंहरति। **ततश्चेति**। उदाहरति। **ददाविति**॥ ननु रसाङ्गभूतानां भावशान्त्यादीनां ध्वनित्वेऽङ्गित्वं चेति विरोधमाशङ्क्य दृष्टान्तेन निराचष्टे।

रसस्य मुख्यत्वे सत्यपि राजानुगतविवाहप्रवृत्तभृत्यवत् कदाचिदङ्गित्वमनु भवन्ति भावशान्त्यादयः॥

तत्र भावशान्तिर्यथा।

**पश्यामः किमियं प्रपद्यत इति स्थैर्ये मयालम्बितं**
**किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः।**
**इत्यन्योन्यविलोलदृष्टिचतुरे तस्मिन्नवस्थान्तरे**
**सव्याजं हसितं मया धृतिहारो बाष्पस्तु मुक्तस्तया ॥**

अत्रेर्ष्याकृतस्य नायिकायाः कोपस्य शान्तिः। विशिष्टस्यापि कोपस्य कोपत्वानवगमात् ॥

भावोदयो यथा।

**तदद्य विश्रम्य दयालुरेधि मे**
**दिनं निनीषामि भवद्विलोकिनी।**
**अदर्शि पादेन विलिख्य पत्रिणा**
**तवैव रूपेण समः स मत्प्रियः॥**

अत्र नलं प्रति दमयन्त्या औत्सुक्यरूपस्य भावस्योदयः॥

विरुद्धयोर्भावयोः परस्परस्पर्धिभावेनोपनिबन्धो भावसंधिः।

यथा।

**अर्धे चेतसि जानकी न विरमत्यर्धे च लङ्केश्वरः**
**किं चार्धं विरहानलः कवलयत्यर्धं च रोषानलः।**
**इत्थं दुर्विधिवैशसव्यतिकराद्दाहे समेऽप्यर्धयो-**
**रेकं वेद्मि तुषाग्निदग्धमपरं दग्धं करीषाग्निना ॥**

अत्र रतिक्रोधयोः संधिश्चर्वणास्पदम् ॥

---

**रसस्येति**। यथा राजानुगतभृत्यस्य राजशेषत्वेऽपि विवाहोपाधिना तं प्रत्येव तादात्मिकं शेषित्वं न विरुध्यते तथैषामपि क्वचित्तात्पर्येण प्रतिपादनेन शेषित्वमविरुद्धं प्रत्युत रसोद्दीपकं सदुपकारकमेवेत्यर्थः॥ **पश्याम** इति। अत्र कश्चित् कामी स्वप्रियासमागमरहस्यं वयस्याय कथयति॥

**तदद्येति**। इन्द्रसंदेशहारिणमाविष्कृतनिजाकारं नलं प्रति तत्स्वरूपं जिज्ञासमा-नायास्तदालोकनकौतुकाकृष्टचित्तया दमयन्त्या वचनमेतत्। पक्षिणा पूर्वं नलप्रहितेन

बहूनां भावनां पूर्वपूर्वोपमर्देनोपनिबन्धो भावशाबल्यम्।

यथा

**क्वाकार्यं शशलक्ष्मणः क्वच कुलं भूयोऽपि दृश्येत सा**
**दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम्।**
**किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा**
**चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥**

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता विश्रान्तिधाम ॥

---

हंसेनेत्यर्थः॥ अर्ध इति। दुर्विधिवैशसव्यतिकराद्दुष्टदैवप्रातिकूल्यमेलनादित्यर्थः। विशसति हिनस्तीति विशसो हिंस्रः। शसु हिंसायामिति धातोः पचाद्यच्। तस्य भावो वैशसं क्रौर्यं प्रातिकूल्यमिति यावत्। युवादित्वादण् प्रत्ययः। अग्नेरिन्धनविशेषाद्दाहकत्वविशेषः प्रसिद्धः। तदिह तुषान्गेः सह्यत्वं करीषाग्रेरसह्यत्वं चेति विवक्षित्वोक्तम्। **एकं वेद्मीत्यादि**। 'धान्यत्वक् विप्रुषास्तुषः' 'गोर्विट् गोमयमस्त्रियां तत्तु शुष्कं करीषोऽस्त्री' इति चामरः॥

**क्वेत्यादि**। एतच्छकुन्तलायामज्ञाताभिजनविशेषायामसक्तस्य राज्ञो दुष्यन्तस्य ब्राह्मणीशङ्क्ताकलितचेतसो वचनम्। तत्राष्टभिर्वाक्यैः क्रमेणाष्टौ वितकार्दयो भावा ध्वन्यन्ते। तत्र

'तर्को विचारः संदेहाद्भ्रूलताङ्गुलिनर्त्तकः।'
'कालाक्षमत्वमौत्सुक्यम्।'
'तत्त्वमार्गानुसंधानात् तत्त्वनिर्धारणं मतिः।'
'स्मृतिः पूर्वानुभूतार्थाविषयज्ञानमुच्यते॥'

'अनिष्टाभ्यागमोत्प्रेक्षा शङ्का'।

सत्त्वत्यागादनौद्धत्यं दैन्यं कापर्ण्यसंभवम्।'
'धृतिश्चित्तस्य नैःस्पृह्यं ज्ञानाभीष्टागमादिभिः।'
'ध्यान चिन्तेहितानाप्तेः शून्यताश्वासतापकृत्।'

एवमसंलक्ष्यक्रमव्यङ्ग्यध्वनिरष्टधा निष्टङ्कितः॥

# 27. रस प्रकरणम्, रसवदाद्यलङ्काराश्च

## विद्यानाथः– प्रतापरुद्रयशोभूषणम् (iv)

## (व्याख्याकारः– मल्लिनाथसूनुः कुमारस्वामी)

अत्र रसो नायकाश्रय एव। यदि परं निपुणनटचेष्टया तथाविधकाव्यश्रवणबलेन च सामाजिकैः साक्षात् भाव्यते तदा परगतस्यापि रसस्य सम्यग्भावनया परत्र निरतिशयानन्दजननमविरुद्धम्। अथवा मालत्यादिशब्देभ्यो योषिन्मात्रप्रतीतौ रावणादिशब्देभ्यः शत्रुमात्रप्रतीतौ च स्मृत्यारूढेन तत्तद्योषिद्विशेषेणानुकार्येण सामाजिकाश्रयत्वमपि—न विरुद्धम्।

---

कदलीरसालादिफलास्वादजन्यानन्दसदृशः कार्यश्च। इतरो ब्रह्मानन्दसब्रह्मचारी नित्यश्च। तत्राद्यस्याश्रयमाह। **अत्रेति**। रसो लौकिको नायकोऽनुकार्यो रामादिराश्रयो यस्य स तथोक्तः। एवकारः आश्रयान्तरव्यवच्छेदार्थः। यद्येवं सामाजिकानां पौनःपुन्येनाभिनयावेक्षणकाव्यश्रवणकौतुकमुन्मत्तचेष्टितं स्यात्। अत आह। **यदि परमिति**। 'शिल्पविन्नायकादीनां तादात्म्यापत्तिभावुकः। चतुर्धाभिनयाभिज्ञो नटो भावादिभेदवित्॥' इत्युक्तलक्षणस्य निपुणस्य नटस्य चेष्टयाभिनयेन तथाविधस्य गुणालंकारपरिष्कृतरसोल्लसितशब्दार्थसंघटनात्मकस्य काव्यस्य श्रवणबलेन। समाजः सभा तत्र समवेताः सामाजिकाः रामादितन्मयीभवनयोग्यमनस्काः। भावुकप्रेक्षकाद्यपरपर्यायाः सहृदया इत्यर्थः। संपूर्वादजेः समूहवाचिनो घञन्तात् 'समवायान् समवैति' इति ठक्प्रत्ययः। तैर्यदि परं साक्षाद् भाव्यते केवलं स्वसंबन्धित्वेनानुसंधीयते चेदित्यर्थः। तर्हि पुत्राद्यानन्ददर्शने पित्रादिवदत्राप्यानन्द उदेतीति भावः। अत एवोक्तं भावप्रकाशे। 'यस्तुष्टौ तुष्टिमाप्नोति शोके शोकमुपैति च। क्रोधे क्रुद्धो भये भीरुः स श्रेष्ठः प्रेक्षकः स्मृतः॥' इति। न केवलं तत्र तावन्मात्रं किं तु विशेषोऽप्यस्तीत्याह। **परगतस्येति**। भावनाविशेषादानन्दविशेषो युक्त एवेति भावः। अथालौकिकरसस्याश्रयमाह। **अथवेति**। **मालत्यादिशब्देभ्य इति**। अभिनयवेलायां नटादिसमुच्चारितेभ्यो विशिष्टकाव्यगतेभ्य इत्यर्थः। योषिन्मात्रप्रतीतौ न तु मालत्यादिविशेषोल्लेखेनेत्यर्थः। एवमन्यत्रापि द्रष्टव्यम्। **स्मृत्यारूढेनेति**। सामान्यप्रतीतौ विशेषस्मरणमनयोरविनाभावमूलमित्यनुसंधेयम्। ननु सामाजिकानां श्रूयमाणमालत्यादिविशेषपरिहारेण स्वाभिलषितनायिकास्मरणे किं प्रमाणमिति न शङ्कनीयम्। काव्यादौ विशेषाणामविवक्षितत्वात्। न हि महाकविभिर्वाल्मीकिप्रमुखैरिव ध्यानदृष्ट्या रामादीनामवस्थाः प्रातिस्विका निरूप्यन्ते। किं

नटस्यानुकरणमात्रपरतया नैव रसाश्रययोग्यता। तस्य भावुकत्वाभ्युपगमेऽपि सामाजिकत्वमेव। अनुभावादीनां प्रकाशनं तु शिक्षाभ्यासपाटवे नैव घटते। रसादीनां परस्परविरोधेऽपि कविप्रौढोक्तिसमाश्रयणेनैकत्र समावेशो न विरुद्धः। विरोधक्रमः शृङ्गारतिलके कथितः।

---

तु रामादिकमाश्रयतया परिकल्प्य स्वप्रतिभाप्रभावलब्धाः सर्वसाधारणा इति। तदुक्तं-षट्सहस्त्रीकारेण। 'एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते इति। तर्हि तैरपि विशेषमात्रं विहाय सामान्यमेव किमिति नोपादीयत इति न वाच्यम्। विशेषोपादानेनैव श्रोतृणामास्वादसंभावात्! तदुक्तम्। 'क्रीडतां मृण्मयैर्यद्वत् बालानां द्विरदादिभिः। स्वेच्छा हि स्वदते तद्वच्छ्रोतृणामर्जुनादिभिः॥' इति। **योषिद्विशेषेणेति**। नायकनयनान्तावलोकन-निर्वेदादीनामप्युपलक्षणम्। योषिन्मात्रे च रसनिष्पत्तेरभावात्। ननु भवन्तु नाम स्मृताः स्त्रीपुंसादयः कथं ते रसनिष्पत्तिः कथं वा रसस्य सामाजिकाश्रयत्वमिति चेदिदमत्रानुसंधेयम्। सामाजिकास्तावत् पूर्वं लौकिकनायकानुरागाद्यनुमानेन संस्कृतहृदयाः काव्यादिशब्दमहिम्ना रामादीन् सामान्यात्मना स्वसंबन्धित्वेन भावयन्ति। ते च भाविता भावुकमनोऽङ्गणे वर्तमानवदवभासन्ते। तदुक्तं भर्तृहरिणा। 'शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥' इति। कंसादीनां प्रत्यक्षरूपमिव शब्दोपहितरूपमप्यर्थक्रियाकारीत्यर्थः। न च सीतारामादीनां स्वस्त्रीपुंसतया भावनादनौचित्यम्। तेषां जनकदशरथतनयत्वादिविशेषपरित्यागेन स्त्रीपुंसमात्रानुवादि-त्वादित्युक्तत्वात्। ते च स्त्रीपुंसादयो लौकिका एव। काव्याभिनयमुखेन विभावादिपदाभिधानराज्याभिषिक्तभावुकैर्भाव्यमानाः सन्तो मुद्रामुद्रितन्यायेन तदन्तःकरणप्रतिबिम्बिताः सामाजिकनिष्ठा भवन्ति। रत्यादयोऽपि लौकिका एवैवंविधाः सन्तः स्थायिभावसाम्राज्यमूर्धाभिषिक्ता भवन्ति। तेऽमी विभावादयः सर्वेऽपि चित्रतुरगन्यायेन सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिविलक्षणचर्वणादिशब्दवाच्यालौकिक-शब्दप्रतीतिविषयत्वादलौकिका एव। तन्निष्पाद्यत्वेनालौकिकस्य रसस्य सामाजिकान्तःकरणप्रतिबिम्बितस्थायिपरिणामत्वमेव सामाजिकाश्रयत्वम्। अस्मिन्नर्थे वृद्धसंवादः प्रकरणान्ते वक्ष्यते। तदेतदभिसंधायाह। **सामाजिकाश्रयत्वमपि न विरुद्धमिति**। अपिशब्दः पूर्वोक्तलौकिकपक्षं समुच्चिनोति। न पुनरलौकिकस्यैवाश्रयान्तरमसंभावितत्वात्। आश्रयान्तरमाशङ्कमानस्तावदेवं प्रष्टव्यः। आश्रयः किमनुकार्योऽनुकर्ता वा। नाद्यः। अतीतत्वात्। न द्वितीयः इत्याह। **नटस्येति**। अनुकरणमात्रपरतयाभिनयाभिनिविष्टचित्त-त्वेन। ननु कदाचिद्रामादितादात्म्यानुसंधानात् सामाजिकत्वमनुभवतो नटस्यानन्दपराधीनस्य कथमभिनयप्रकाशनमत आह। **अनुभावादीनामिति**। ननु तत्र रसान्तरसमावेशो न कथं प्रकृतरसभङ्गहेतुरत आह। **रसानामिति**। अपिशब्दादविरोधे किमु

शृङ्गारबीभत्सरसौ तथा वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥

रसाद्रसोत्पत्तिरपि मता। तथा चोक्तं शृङ्गरतिलके।

हास्यो भवति शृङ्गारात् करुणो रौद्रकर्मणः।
अद्भुतश्च तथा वीराद्वीभत्साश्च भयानकः॥

व्यभिचारिभावानां तत्तद्रसानुगुण्यमेवं प्रतिपादितं शृङ्गारतिलके। तथा हि-

शङ्कासूया भयं ग्लानिर्व्याधिश्चिन्ता स्मृतिर्धृतिः।
औत्सुक्यविस्मयावेगा व्रीडोन्मादौ मदस्तथा॥

विषादो जडता निद्रावहित्था चापलं मृतिः।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः॥

श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च
शङ्कासूयावहित्था च हास्ये भावा भवन्त्यमी॥

संत्रासो मरणं दैन्यं ग्लानिश्चैव भयानके।
अपस्मारो विषादश्च भयं रोगो मृतिर्मदः॥

उत्साहश्चेति विज्ञेया भावा बीभत्ससंभवाः।
आवेगो जडता मोहो हर्षणं विस्मयः स्मृतिः॥

इति भावा विबद्धव्या रसज्ञैरद्भुते रसे।
दैन्यं चिन्ता तथा ग्लानिर्निर्वेदो जडता स्मृतिः॥

---

वक्तव्यमिति भावः। **प्रौढोक्तिसमाश्रयणेनेति**। रसानां मिथोविरोधोऽस्तु मा वा। कस्यचिदङ्गित्वाङ्गीकारेणेतरेषां परिपोषाभावान्नास्ति विरोध इति कविसमयाश्रयणादित्यर्थः। तदुक्तं ध्वन्याचार्यैः। 'अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे। परिपोषं न नेतव्यस्तदा स्यादविरोधिता॥' इति। न केवलमविरोधः प्रत्युत तथाविधे विषये सहृदयानां प्रह्लादातिशय एवेत्यपि तत्रैवोक्तम्। एकत्र प्रबन्धे वा वाक्ये वा रसविरोधक्रमं संमतिव्याजेनाह।

**शृङ्गारेति**। प्रसंगाच्छृङ्गारादिभ्यो हास्यादीनामुत्पत्तिमाह। **रसादिति**। अत्र बाह्यार्थसंबन्धस्य यथायोगं सत्त्वरजस्तमोऽहंकारसहितस्य मनसो विकारविशेषाः

**व्याधिश्च करुणे वाच्या भावा भावविशारदैः।**
**हर्षोऽसूया तथा गर्व उत्साहो मद एव च ॥**

**चापल्यमुग्रता चैव रौद्रे भावाः प्रकीर्तिताः।**
**अमर्षः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः॥**

**क्रोधोऽसूयाथ संमोह आवेगश्चोपहर्षणम्।**
**गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ॥**

**रसः सर्वोऽपि संपूर्णस्तिरोधत्ते रसान्तरम्॥** इति।

भारतीयोक्तप्रक्रियया यद्यप्येक एव रसस्तथापि महाकविप्रसिद्ध्या रससंकरः स्वीक्रियते।

*तत्र रसादेरप्राधान्ये रसवदाद्यलंकारा भवन्ति। अन्याङ्गत्वेन रसनिबन्धने रसवदलंकारः। भावनिबन्धने प्रेयोऽलंकारः। रसाभासभावाभासनिबन्धने ऊर्जस्विदलंकारः। भावशान्तिनिबन्धने समाहितालंकारः। तथा भावोदयादयोऽपि।*

एतदलंकारसर्वस्वे प्रपञ्चेनोक्तम्। 'रसभावतदाभासतत्प्रशमननिबन्धने रसवत्प्रेय ऊर्जस्विसमाहितानि। भावोदयभावशान्तिभावसंधिभावशबलताश्च पृथगलंकाराः' इति। एतेषामुदाहरणमलंकारप्रकरणे भविष्यति।

**गुणालंकारश्रीकृतपरिकरो भावविभवः**
**स्फुरत्प्रादुर्भावः क्रमगलितवेद्यान्तरमतिः।**
**सुखं वा दुःखं वा निबिडयतु यूनोः सहृदये**
**त्वमन्दानन्दात्मा परिणमति पूर्णो रसभरः॥**

---

शृङ्गारादयः। एतेभ्य एव सत्त्वरजस्तमोऽहंकारेषु यथायोगमावापोद्धारसहितेभ्यो हास्यादय उत्पद्यन्त इति नारदादयः। वासुकिनोक्तो विशेषो भावप्रकाशे द्रष्टव्यः। अथ व्यभिचारिभावानां व्यवस्थामाह। **व्यभिचारिभावानामित्यादिना**। अथ रसवदाद्यलंकार-विचारमारभते। **रस इति**। वाक्यार्थत्वेन प्रधानभूत इत्यर्थः। संपूर्णः स्वस्व-विभावादिसामग्रीपरिपुष्टः। रसान्तरमङ्गभूतम्। **महाकविप्रसिद्ध्येति**। अङ्गभूतस्य विश्रान्तिविषयत्वभावेन रसत्वाभावेऽपि महाकविभी रसत्वेन व्यवहारादित्यर्थः। वस्तुतस्तु तदानीमलंकारत्वमेव रसदीनामपीति भावः। तदेव विविनक्ति। **तत्रेत्यादिना**। अत्र

रसवदलंकारस्योदाहरणं यथा। 'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥' रणभुवि पतितं भूरिश्रवसो भुजं दृष्ट्वा तत्प्रेयसीनामयं विलापः। अत्राधिकारिकस्य करुणस्याङ्गभूतः शृङ्गारोऽलंकारतामापद्यते। एवमन्यदप्युदाहार्यम्। अथ प्रतिपत्तिसौकार्यार्थं रसस्वरूपं श्लोकत्रयेण संगृह्णाति। **गुणेति**। गुणालंकारग्रहणं वृत्तिरीत्यादीनामप्युपलक्षणार्थम्। तेषां श्रिया संपत्त्या कृतपरिकरो विशिष्टकाव्यप्रतिपादितविभावाद्याभिव्यक्त इत्यर्थः। अत एव स्फुरन्नुत्पद्यमानः प्रादुर्भावो रसोन्मुखत्वं यस्य स तथोक्तः। भावविभवो रत्यादिस्थायिभाववर्गः। प्रथमं तावत् काव्याभिनयाभिनिविष्टस्य सामाजिकस्य रसप्रादु- र्भावसमये नटे रामादिप्रतीतिदार्ढ्यमुत्पद्यते। ततः सामाजिकानुकार्यहृदयोरभेदप्रतीतिः। ततः सामाजिकहृदयं नृत्तगीतादिनानाविधनाट्यधर्मेषु निमज्जति। ततो वेद्यान्तरमतिर्विगलति। तदानीमलौकिको रसो योगिवेद्यब्रह्मानन्दसदृशः स्वयमेव चर्वणास्पदं भवति। यदाहुः। 'पाठ्यादथ ध्रुवागानात् ततः संपूरिते रसे। तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः- क्षणम्॥ ततो निर्विषयस्यास्य स्वरूपावस्थितो निजः। व्यज्यते ह्लादनिष्यन्दो येन तुष्यन्ति योगिनः॥' इति। तदेतत् सर्वं मनसि निधायाह। **क्रमगलितवेद्यान्तरमतिरिति**। इयांस्तु विशेषः। ब्रह्मानन्दानुभवे वेद्यान्तरं किमपि न स्फुरति। रसास्वादे तु विभावादिव्यतिरिक्तवेद्यान्तरनिरास इति। तर्हि विभावादिप्रतीतावखण्डानन्दानुभवः कथमिति चेत् सत्यम्। 'द्राक्षामधूकखर्जूरकाश्मर्यैः सह रूषकैः। तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम्॥ पानकं पञ्चसाराख्यं दाहतृष्णानिवर्तकम्॥' इत्युक्तलक्षणनानारसकदम्बस्वरूपपानकरसन्यायेनेति ब्रूमः। नन्वानन्दमूले शृङ्गारादावस्तु नाम सुखास्वादः। शोकमूले पुनः करुणे कथमेतदित्याशङ्क्यानुकार्यविषयेयमास्वादवैचित्री न सामाजिकविषयेत्याह। **सुखं वेति**। अत्रास्य सूत्रस्य शाटकं वयेति न्यायेन भाविनीं वृत्तिमाश्रित्य लौकिकौ रत्यादिभावः श्लेषभङ्ग्या भावविभवशब्देनोच्यते। अयं यूनोः स्त्रीपुंसयोः सुखं लौकिकं शृङ्गारादौ दुःखं करुणे निबिडयतु दृढं करोतु। येषां काव्यानुशीलनाभ्यासवशात् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता अत एव हृदयसंवादभाजः सहृदया इत्युक्तलक्षणे सहृदये तु पूर्णः पूर्वोक्तरीत्या विभावादिसमुल्लासितः सन्नित्यर्थः। रसभरः पूर्णस्य भारत्वं युक्तमेवेति भावः। अमन्दानन्दात्मा ब्रह्मानन्द इव निरतिशयसुखस्वरूपः परिणमति। ननु यद्ययमानन्दात्मकः कथं तर्हि भावुकानां करुणात्मककाव्यश्रवणे तथाविधाराविर्भाव इति चेन्नैव दोषः। संभोगसमये स्त्रीणामधरदंशनादौ कृत्रिमदुःखानुभावसीत्कारवदत्राप्युपपत्तेः। सुखेऽपि दुःखवदुपचारः कुट्टमितामिति तल्लक्षणात्। यद्यप्यस्यापि सहजदुःखात्मकत्वं स्यान्न कोऽपि सामाजिकस्तत्र प्रवर्तेत। ततश्च करुणैकरसानां रामायणादीनामुच्छेदप्रसङ्गः स्यात्। तस्माद्रसान्तरवत् करुणस्यापि आनन्दात्मकत्वमेवेति निरवद्यम्। ननु रसास्वादे विशेषाभावात् कथं नवधा विभाग इति चेत् सत्यम्। यथैकस्य ब्रह्मानन्दस्य चन्द्रकान्तसोपानपङ्क्तिप्रतिबिम्बितचन्द्रबिम्बवदुपाधिभेदादनेकधा कल्पनं तद्वदत्रापि व्यञ्जकविभावा-

**रसो वाक्यार्थः सन् विलसति पदार्थाः पुनरमी**
**विभावाद्या यस्मिन् किल दधति विश्रान्तिमुचिताम्।**
**अतो भावा एव क्रमसमुदितान्योन्यविभवा**
**रसीभावं बिभ्रत्यथ च पटतां तन्तव इव॥**

---

दिभेदाद्वस्तुतः एकस्यापि नानात्वमिति वेदितव्यम्। अथैवंविधो रसः काव्यादौ केन कारणेन प्रतीयत इत्याकाङ्क्षायामाह।

**रस इति**। **वाक्यार्थ इति**। कविसंरम्भविश्रान्ते रसस्यैव प्रधानत्वादिति भावः। तदुक्तम्। 'कवेर्विवक्षया यत्र प्राधान्यं परिकल्प्यते। भवेत् स एव वाक्यार्थ इति निर्णीयते बुधैः॥' इति। न चास्य पदार्थसंसर्गादिरूपवाक्यार्थवन्मतभेदेन वाच्यत्वं लक्ष्यत्वं वा संभवति। अभिधालक्षणयोरत्रानवकाशात्। तात्पर्यविशेषस्तु व्यञ्जनान्तर्भूत एवेति प्रतिपादितं काव्यप्रकरणे। अतोऽयं वाक्यार्थो व्यङ्ग्य एवेति वेदितव्यम्। अमी रसव्यञ्जका विभावाद्याः पुनः पदार्थाः। यद्यपि विभावादीनां स्वस्ववाक्यापेक्षया वाक्यार्थत्वं तदुक्तम्—'स्थायी वा सात्त्विको वापि संचारी वा क्वचित् क्वचित्। भावो वाक्यार्थतामेति तत्तद्भावविशेषतः॥' इत्यादिना तथापि रसं प्रत्यवान्तरव्यापारत्वात् पदार्थव्यवहारः। एवं च पदार्थस्थानीयभावादिप्रतीत्युत्तरकालीनस्फुरणतया रसो वाक्यार्थस्थानीय इति निष्कर्षः। रसं प्रति विभावादीनामवान्तरव्यापारत्वं निर्वहति। **यस्मिन्निति**। उचितां विश्रान्तिं दधति कारकज्ञापकभाववैलक्षण्येन व्यञ्जनध्वननचर्वणचमत्कारादिशब्दवाच्यरसगोचरज्ञान-विशेषोपयोगित्वं भजन्त इत्यर्थः। अत एवोक्तं लोचने। 'विभावादिरत्र न ज्ञापको नापि कारकः। अपि तु चर्वणोपयोगी' इति। अत एवालौकिकत्वमस्येति भावः। एतच्चाघटितघटनासूचकेन किलशब्देन द्योत्यते। **अत इति**। विभावादिविश्रान्तेरित्यर्थः। भावाः स्थायिभावा एव क्रमेणाङ्कुरितकन्दलितपल्लवितत्वादिरूपेण समुदितोऽन्योन्यविभवः स्वस्वपरिपोषो येषां ते क्रमसमुदितान्योन्यविभवाः। यद्यप्यन्योन्यशब्दः कर्मव्यतीहारे द्विर्भावितस्तथाप्यौचित्यादुक्तार्थे योजनीयः। अथ च विभावादिसंनिधानन्तरमेवेत्यर्थः। चोऽवधारणे। अनेन व्यङ्ग्यव्यञ्जकयो रसविभावाद्योरस्त्येव क्रमः। किं तु शतपत्रपत्रशतव्यतिभेदवदाशुभावित्वान्न संलक्ष्यत इति सूचितं भवति। रसीभावं बिभ्रति पूर्वं वासनामात्रावस्थायिनः स्थायिनो विभावादिमहिम्ना रसात्मना परिणमन्ति रसादिशब्द-प्रतिपाद्यत्वं च भजन्त इत्यर्थः। तत्र दृष्टान्तमाह। **पटतां तन्तव इति**। तदुक्तम्। 'यथा हि तन्तवो वेमतुर्यादिक्रिययान्विताः। पटात्मना परिणता पटवाच्या भवन्ति ते॥ तथैव स्थायिनो भावा विभावादिभिरन्विताः। रसात्मना परिणता रसवाच्या भवन्ति ते॥' इति। अथ निर्वेदादीनां रसपोषकाणामवस्थानक्रममभिदधानः प्रतिपत्तिदार्ढ्यार्थं पूर्वोक्तमेव रसार्याश्रयं स्मारयति।

भावे स्थायिनि वर्धमानविभवे रत्यादिके सिन्धुवत्
कल्लोला इव संभवन्ति विलयं चायान्ति भावा मुहुः।
निर्वेदाद्युपभोगभावितनिजास्वादातिरेको रसो
लोके स्यादनुकार्य एव कथितो नाट्ये तु सामाजिके॥

इति श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे
रसप्रकरणम् समाप्तम्।

---



**भाव इति**। वर्धमानविभवे विभावादिभिरिति भावः। यथार्णवे कल्लोला उत्पद्यन्ते विलीयन्ते च तद्वद्रत्यादिस्थायिभावे निर्वेदादयो निमज्जन्त्युन्मज्जन्ति चेति भावः। तदुक्तम्। 'मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे। तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि॥ तथा स्थायिनि निर्मग्ना ह्युन्मग्ना व्यभिचारिणः। पुष्णन्ति स्थायिनः स्वांश्च तन्नयन्ति रसात्मताम्॥' इति। ततः किमत आह। **निर्वेदेति**। निर्वेदादीनामुपभोगेन चर्वणया भावित उत्पादितः निजः स्वगोचर इत्यर्थः। स्वस्मादभिन्नस्यापि स्वरूपस्य स्वेनैव विषयीकरणसंभवात्। यदाहुः। 'आत्मानमात्मन्यवलोकयन्तम्' इति। तथाभूतः स्वादातिरेकोऽलौकिकचमत्कारात्मा यस्य स तथोक्तः सन् रसोऽखण्डानन्दात्मको भवति। अयं च लोके स्यात् लौकिकश्चेदित्यर्थः। अनुकार्ये रामादावेव नान्यत्र। नाट्ये तु अलौकिकश्चेदित्यर्थः। **सामाजिके कथित इति**। अत्र रसो नायकाश्रय एवेत्यत्रेति शेषः। अत एवोक्तं लोचने। 'स च न व्यतिरिक्तमाधारमपेक्षते। किं त्वनुकार्याभिन्नाभिमते नर्तके आस्वादयिता सामाजिकः। तेन नाट्य एव रसा नानुकार्यादिषु' इति। उक्तं च शारदातनयेन। 'व्यापारेण च काव्यस्य तदीयाभिनयेन च। रसात्मत्वं नीयमानः स्थायी स्वाद्यत्वमेष्यति॥ सामाजिकादिरेवास्य रसस्याश्रय उच्यते। रसस्य वर्तमानत्वात् नानुकार्यस्य संभवः॥ अनुकार्यस्य रामादेः कालातिक्रमदर्शनात्। नातिक्रान्तानुकार्यस्य रसोद्भावनया कविः॥॥ बध्नाति काव्यं यत् तस्माद्रसः सामाजिकाश्रयः॥' इति। केचिदेतत् सामाजिकश्रयत्वमारोपितं न तु मुख्यमित्याहुः। तदुक्तं महोपाध्यायनरहरिसूरिणा। 'एवं सामाजिकसमवेततां रसस्याङ्गीकृत्यालौकिकता वर्णिता। परमार्थतः पुनः परिपूर्णाखण्डैकरसानन्दरूपपरमेश्वरपर्यायस्यास्य रसस्याधिकरणचिन्ता कुतो वा। न सत्यानन्तानन्दात्मके ब्रह्मण्यपि पदमासादयेदिति विचारचतुरैरनादिकविभिरनाधारो रसः सामाजिकैः परं चर्व्यते विभावादिभिः परं व्यज्यते। योगिगम्यत्वमात्रेणेश्वरस्य योगिमनोनिवाससंवादवत् सामाजिकाधिकरणत्वारोपोऽपि सह्यते' इत्यादिभिर्युक्तिभिः प्रतिपादितम्।

## 28. रसविषये ऐतिह्यादिकम्

### शारदातनयः–भावप्रकाशनम् (iii)

कथिताः स्थायिनस्तेषु विभावादिसहायता।
तेषां रसात्मता तादृक्स्वरूपं तद्रसस्य च ॥

तद्भेदास्तन्निरुक्तिश्च तद्विभावादिभाव्यता।
तदुत्पत्तिप्रकाराश्च तज्ज्ञानं च तदाश्रयः॥

तद्भोग्यता तत्करणं संबन्धो भोक्तृभोग्ययोः।
इदानीं कथ्यतेऽस्माभिः प्रकारान्तरकल्पितः॥

उत्पत्तिर्जन्यजनकभावस्तेषां यथाक्रमम्।
ततः स्थायिषु भावेषु तदसाधारणात्मकः॥

नियमश्च विभावादेस्तदात्वप्रक्रियाऽपि च।
अनुभावैस्तु वागङ्गमनआरम्भजन्मभिः॥

वागारम्भादिभेदेन विकल्पा रसगामिनः।
तत्तदालम्बनीभूतनायकादिगुणादयः ॥

अन्येऽपि भावा ये केचित्तत्तदर्थानुषङ्गिणः।
प्रवेक्ष्यन्ति च तत्रैव विज्ञेयास्ते विचक्षणैः ॥

शृङ्गार उदभूत्साम्नो वीरोऽभूद्वितितो ऋचः।
अथर्ववेदतो रौद्रो बीभत्सो यजुषः क्रमात् ॥

सामानि स्मरतस्तस्य स्वरूपव्यक्तिरात्मना।
याचेयमिच्छा जगतां सिसृक्षोः परमात्मनः ॥

विषयाक्ता रतिः सैव शृङ्गार इति गीयते।
इच्छा क्रियात्मिका ज्ञप्तिस्तस्यैव स्मरतो ऋचः ॥

उत्साहात्मा विषयिणी वीर इत्युच्यते बुधैः।
स्मरतोऽथर्वमन्त्राणां तत्तद्धिंसात्मिका मतिः॥

या क्रियोपहिता क्रोधात्स रौद्र इति कथ्यते।
क्रियारूपा प्रवृत्तिर्या तस्यैव यजुषां स्मृतेः॥

फलावसानिकी सैव बीभत्स इति गीयते।
शृङ्गारस्यानुकरणं हास्य इत्यभिधीयते॥

वीरस्य कर्म यद्वीरं सोऽद्भुतः परिकीर्तितः।
क्रूरक्रिया या रौद्रस्य सैव स्यात्करुणाह्वया॥

बीभत्सस्यापि यत्कर्म स भयानक ईरितः।
प्राधान्यं जनकत्वेन जन्यत्वेनाप्रधानता॥

प्रधानताप्रधानत्वे ज्ञातव्ये नाट्यहेतवे।
यत्तु प्रधानं तदनुभावादन्यत्प्रसिध्यति॥

तस्मात्प्रधानेतरयोर्ज्ञानं नाट्योपकारकम्।
तस्मात्प्रधानाः शृङ्गारवीररौद्राः पृथक्पृथक्॥

सबीभत्सास्स्वतन्त्रत्वादेषां प्राधान्यकल्पना।
स्वातन्त्र्यमेषामुत्पत्तिमितरेषां च सम्भवम्॥

व्यासप्रोक्तेन मार्गेण कथयामि यथार्थतः।
कल्पस्यान्ते कदाचित्तु दग्ध्वा लोकान्महेश्वरः॥

स्वे महिम्नि स्थितः स्वैरं नृत्यन्नानन्दमन्थरम्।
मनसैवासृजद्विष्णुं ब्रह्माणं च महेश्वरः॥

वामतो वैष्णवी शक्तिः स्थिता मायामयी विभोः।
अम्बिकारूपमास्थाय स्थिता सा सर्वमङ्गला॥

नियोगाद्देवदेवस्य ब्रह्मा लोकानथासृजत्।
सृष्ट्वा स देवदेवस्य पुरावृत्तमथास्मरत्॥

दिव्यं चरित्रमैशं मे कथमध्यक्षतामियात्।
इति चिन्तापरे तस्मिन्नभ्यगान्नन्दिकेश्वरः॥

स नाट्यवेदमध्याप्य सप्रयोगं चतुर्मुखम् ।
उवाच वाक्यं ब्रह्माणं नन्दी तच्चिन्तितार्थवित् ॥

नाट्यवेदोपदिष्टानि रूपकाणि च यानि तु ।
विधाय तेषामेकं तु रूपकं लक्षणान्वितम् ॥

भरतेषु प्रयोज्यं तत्त्वया सम्यग्विधानतः ।
तस्मिन्प्रयुक्ते भरतैर्भावाभिनयकोविदैः॥

प्राक्तनानि च कर्माणि प्रत्यक्षाणि भवन्ति ते ।
एवं ब्रुवन्नन्तरधान्नन्दी स भगवान्प्रभुः॥

श्रुत्वैतद्वचनं प्रीतो ब्रह्मा देवैः समन्वितः ।
ततस्त्रिपुरदाहाख्यं रूपकं सम्यगभ्यधात् ॥

अध्याप्य भरतानेतत्प्रयुङ्ग्ध्वमिति चाब्रवीत् ।
तस्मिंस्त्रिपुरदाहाख्ये कदाचिद्ब्रह्मसंसदि ॥

प्रयुज्यमाने भरतैर्भावाभिनयकोविदैः ।
तदेतत्प्रेक्षमाणस्य मुखेभ्यो ब्रह्मणः क्रमात् ॥

वृत्तिभिः सह चत्वारः शृङ्गाराद्या विनिस्सृताः ।
यदाऽभिनीतो भरतैः सम्भोगः शिवयोस्तदा ॥

कैशिकीवृत्तितो जज्ञे शृङ्गार पूर्वतो मुखात् ।
यदाऽभिनीतं भरतैः सम्यक्त्रिपुरमर्दनम् ॥

सात्त्वतीवृत्तितो जज्ञे वीरो दक्षिणतो मुखात् ।
यदा दक्षाध्वरध्वंसोऽभिनीतो भरतैर्दृढम् ॥

अभूदारभटीवृत्ते रौद्रः पश्चिमवक्त्रतः ।
यदाऽभिनीतं कल्पान्तकर्म शम्भोर्नटैस्तदा ॥

भारतीवृत्तितो जज्ञे बीभत्सश्चोत्तराननात् ।
व्यक्ता मुखेभ्यश्चोत्पन्ना इत्यूचुः शङ्करादयः॥

एभ्यो रसेभ्यो निष्पत्तिरितरेषां प्रदर्श्यते।
जटाजिनधरो भोगिभूषणः साग्निलोचनः॥

भस्माङ्गरागश्च यदा देव्या कामयते रतिम्।
तदा सखीनां देव्याश्च हासः समुदभून्महान्॥

तस्माद्धास्यमुत्पत्तिः शृङ्गारादिति कथ्यते।
पुराणि त्रीणि घटितान्ययोरजतकाञ्चनैः॥

एकैकस्य तु रक्षार्थमसुराणां तरस्विनाम्।
कोट्यः शतसहस्राणि स्थापितानि ततस्ततः॥

द्विगुणोत्तरवृद्धानि बलान्यतिबलानि च।
अम्बिकामसितापाङ्गीमपाङ्गेनावलोकयन्॥

विषह्य शरवर्षाणि स्मयमानः स्मरान्तकः।
शरेणैकेन तान्येको भस्मसादकरोद्यदा॥

तदा समस्तभूतानामद्‌भुतं यदभून्महत्।
तस्मादद्‌भुतनिष्पत्तिर्वीरादेवेति कथ्यते॥

रुद्रेण वीरभद्रेण दक्षस्य ध्वंसिते मखे।
दण्डितेषु च देवेषु नानाप्रहरणैः पृथक्॥

विलोक्य तान्प्रलपतश्छिन्नकर्णाक्षिनासिकान्।
दीनान्देव्याः सखीनां च करुणो यदभून्महान्॥

तस्मात् प्रवृत्तः करुणो रौद्रादिति विभाव्यते।
दग्धानामादिदेवानामस्थीन्यामुच्य भैरवे॥

तच्छ्मशानमधिष्ठाय तद्भस्मालिप्य नृत्यति।
प्रमथा भूतसङ्घास्तमवेक्ष्य भ्रान्तचेतसः॥

तमेव शरणं जग्मुर्यतो भयविमोहिताः।
तस्माद्भयानको जातो वीभत्सादिति गण्यते॥

नारदेनेष कथितः प्रकारो भरताय च।
तथैव भरतेनोक्तं यादृशं नारदाच्छ्रुतम् ॥

तदुक्तेन प्रकारेण रसानां च पृथक् पृथक्।
उत्पाद्योत्पादकत्वं च यथावदुपपादितम् ॥

यथा हि तन्तवो वेमतुर्यादिक्रिययान्विताः।
पटात्मना परिणताः पटवाच्या भवन्ति ते ॥

यथा मृदो दण्डचक्रकुलालादिभिरन्विताः।
घटात्मना परिणताः घटवाच्या भवन्ति च ॥

तथैव स्थायिनो भावा विभावादिभिरन्विताः।
रसात्मना परिणता रसवाच्या भवन्ति ते ॥

यथैव तन्तुभेदाच्च पटभेदः प्रदृश्यते।
तथैव रस[भाव]भेदाच्च रसभेदो विभाव्यते ॥

यथा कारणवैकल्यात्कार्यं नोत्पद्यते दृढम्।
तथा कारणभावादिवैकल्यान्न रसोदयः॥

तस्माद्विभावानुभावसात्त्विकव्यभिचारिभिः।
वर्धिताः स्थायिनो भावा नायकादिसमाश्रयाः॥

अनुकारतया नाट्ये क्रियमाणा नटादिषु।
रसतां प्रतिपद्यन्ते सामाजिकमनस्सु ते ॥

संस्कारैः प्राक्तनैस्तैश्च रस्यन्ते यत्ततो रसाः।
स्थायिनां रसनिष्पत्तौ तदसाधारणात्मकः॥

विभवादिनिवेशस्य नियमोऽत्र प्रदर्श्यते।
काव्यर्तुमाल्य सङ्गीतचन्दनेन्दूदयादयः॥

विभावास्स्तम्भरोमाञ्चस्वेदवेपथुगद्गदाः।
सात्त्विकास्तूग्रतालस्यजुगुप्साभिर्विवर्जिताः॥

सञ्चारिणोऽपि रत्याख्ये स्थायिनि स्थानमाश्रिताः ।
उद्भावयन्ति शृङ्गारमनुभावोऽस्य तु त्रिधा ॥

स्वेदादिभिः कटाक्षाद्यैः प्रियभाषादिभिर्भवेत् ।
विकटाकारवेषेण विकृताचारकर्मभिः॥

विकृतैरपि वाक्यैश्च धाष्टर्यलौल्यानुभूतिभिः ।
विकृताभिनयेनैव विकृताङ्गावलोकनात् ॥

कुहकासत्प्रलापेन दोषोदाहरणादिभिः ।
हास्यः स्यात्स तु भूयिष्ठं स्त्रीनीचादिषु दृश्यते ॥

स्वपराश्रयभेदेन स द्विधा परिकल्प्यते ।
पुनः प्रकृतिभेदेन षट्प्रकारः प्रदृश्यते ॥

निगद्यते वरिष्ठानां स्मितं हसितमित्यपि ।
मध्यमानां विहसितं तथोपहसितं भवेत् ॥

नीचानां चापहसितं तथाऽतिहसितं क्रमात् ।
ईषद्विकासिगण्डं यत्सकटाक्षनिरीक्षणम् ॥

अलक्ष्यदन्तज्योत्स्नं तदुत्तमानां स्मितं भवेत् ।
उत्फुल्लमाननं यत्र विकसद्गण्डमण्डलम् ॥

लक्ष्यमाणद्विजं यत्स्यात्तदेव हसितं भवेत् ।
आकुञ्चिताक्षिगण्डं यन्मुखरागसमन्वितम् ॥

सस्वनं मधुरं यत्स्यात्तद्वै विहसितं भवेत् ।
जिह्मावलोकनादृष्टिः मुखमुत्फुल्लनासिकम् ॥

निकुञ्चितं शिरो यत्र तच्चोपहसितं भवेत् ।
अस्थानहासरटितमाविरास्र विलोचनम् ॥

कम्पितपाङ्गशिरोगात्रं तच्चापहसितं भवेत् ।
विक्रुष्टस्वनसंरम्भमुद्धतं सास्रलोचनम् ॥

करोपगूढपार्श्वं यत्तच्चातिहसितं भवेत् ।
सात्त्विका हास्यसम्पत्तौ सर्वे प्रलयवर्जिताः॥

उत्तमप्रकृतिर्वीर उत्साहात्मा विभाव्यते ।
उत्साहः सत्त्वसम्पत्तिशौर्यत्यागादिसम्भवः॥

अविस्मयादसंमोहादविषादित्वतोऽपि च ।
पुरुषार्थविशेषेषु कार्यतत्त्वार्थनिश्चयः॥

पराक्रमः प्रतापश्च दुर्धर्षप्रौढसैन्यता ।
यशः कीर्तिश्च विनयो नयश्च प्रभुशक्तता ॥

मन्त्रशक्तिश्च सम्पन्नधनाभिजनमित्रता ।
इत्यादयो विभावाः स्युर्वीरस्य कविकल्पिताः॥

स्थैर्यशौर्यप्रतापैश्च धैर्यैराक्षेपभाषितैः ।
सामादीनामुपायानां यथाकालप्रयोगतः॥

भाषितैर्भावगम्भीरैरनुभावा भवन्ति ते ।
प्रबोधामर्षगर्वौग्र्यमदहर्षाः स्मृतिर्धृतिः॥

औत्सुक्यतर्कासूयाश्च भवन्ति व्यभिचारिणः ।
सात्त्विकाः स्वेदरोमाञ्चा मदहर्षादिसंभवाः॥

गुणास्त्यागादयोऽपि स्युरनुभावाः क्वचित्क्वचित् ।
विस्मयात्मा भवत्येव समप्रकृतिरद्भुतः॥

कर्मणोऽतिशयान्नृणामीप्सितार्थोपसङ्गमात् ।
मनोरथफलप्राप्तेर्दिव्यभावावलोकनैः॥

विमानोद्यानभवनसभारामावलोकनैः ।
विरुद्धानां पदार्थानामविरुद्धसमागमैः॥

असम्भाव्यस्य चार्थस्य सम्भवोत्पत्तिदर्शनैः ।
अदेशकालसम्पत्तेरभीष्टादेरचिन्तितम् ॥

इत्यादिभिर्विभावैस्तैरद्भुताख्यो रसो भवेत्।
स्तम्भवेपथुरोमाञ्चस्वरसादाश्रुनिर्गमाः॥

सञ्चारिणोऽपि तस्य स्युर्ये शृङ्गारोपयोगिनः।
अनुभावास्तु वक्ष्यन्ते परत्राद्भुतवर्णने ॥

राक्षसोद्धतदैतेयक्रूरादिप्रकृतिर्भवेत्।
रौद्रस्तस्यानृतं वाक्यमवज्ञापरुषोक्तयः॥

वधान्यदारलाभादिप्रतिज्ञा राष्ट्रभञ्जनम्।
हठाद्ग्राहो गृहक्षेत्रदारादीनां च मत्सरः॥

देशजातिकुलाचारविद्याशौर्यादिनिन्दनम्।
आक्रोशकलहाक्षेपवाक्याज्ञाभञ्जनादयः॥

एते विभावा भ्रुकुटीकपोलस्फुरणं मुहुः।
दन्तोष्ठपीडनं हस्तनिष्पेषो रक्तनेत्रता ॥

शस्त्रास्त्रग्रहणच्छेदस्तलताडनमोटने।
पानं च रुधिरादीनामान्त्रादिभिरलङ्क्रिया ॥

पातोऽविचारतो युद्धे गर्जनं भर्त्सनं मुहुः।
एतेऽनुभावा रोमाञ्चस्वदेकम्पादयोऽपि च ॥

औग्र्यावेगमदामर्षमूर्च्छाऽसूयाऽवहित्थकः।
स्मृतिचापलबोधाश्च धैर्योत्साहादयो गुणाः॥

शोकात्मा करुणो योषिन्नीचादिप्रकृतिस्स्वतः।
अभीष्टविरहाच्छापात्क्लेशाच्च विनिपातनात् ॥

वधादिष्टस्य पुत्रादिनिधनादर्थहानितः।
राज्यदेशपरिभ्रंशादन्यान्यव्यसनोदयात् ॥

दैवोपघाताद्दारिद्र्याध्यादिभ्यः प्रजायते।
श्रुतेभ्यो वाऽनुभूतेभ्यो दृष्टेभ्यो वा नृणां भवेत् ॥

अश्रुपातो मुखे शोषः स्वरभेदो विवर्णता।
निश्वासः स्मृतिलोपश्च विलापस्त्रस्तगात्रता ॥

मोहागमोऽभिघातश्च भूपातः परिदेवितम्।
विवेष्टनं महीपृष्ठे भुजयोश्च विवर्तनम् ॥

श्वासोच्छ्वासौ देहघातपातोरस्ताडनानि च।
मोहो विषादनिर्वेदौ चिन्तौत्सुक्ये च दीनता ॥

जडता व्याधिरुन्मादापस्मारालस्यमृत्यवः।
स्तम्भकम्पाश्रुवैवर्ण्यस्वरभङ्गादयस्तथा ॥

एतेऽनुभावाः कथिता दीप्यमानास्तु दीपनाः।
स्त्रीनीचादिषु शोकोऽयं मरणव्यवसायदः॥

मध्यमानां भवेच्छोके मुमूर्षा मृतिरेव वा।
उत्तमानामतिप्रौढो विवेकेनैव शाम्यति ॥

पराश्रयस्तूत्तमानामात्मनो व्यसनप्रदः।
बीभत्सः स्याज्जुगुप्सात्मा क्षोभोद्वेगविभागभाक् ॥

क्षोभात्मा रुधिरान्त्रादिदर्शनस्पर्शनादिजः।
उद्वेगात्मा कृमिच्छर्दिपूतिविष्ठादिजो भवेत् ॥

द्वेषो ग्लानिर्भयं मोहः क्रोधो निद्रा भ्रमो मतिः।
वक्ष्यन्ते ह्यनुभावाश्च नासाप्रच्छादनादयः॥

पुरैव कथिता ह्यस्य सम्भाव्या व्यभिचारिणः।
भयानको भयस्थायी स्वभावकृतकात्मकः॥

विकृतैश्च रवैः सत्त्वैर्विकृताकारदर्शनैः।
शून्यारण्यादिगमनैस्सङ्ग्रामादिप्रवेशनैः॥

गुरुराजापराधैश्च विभावैरेवमादिभिः।
अनुभावास्तु वक्ष्यन्ते वाङ्मनःकायभेदतः॥

उक्तानुक्तानभिज्ञत्वंदिङ्मोहाद्या यथार्थतः।
एवं रसाः सानुभावविभावाः सम्यगीरिताः॥

शृङ्गारो वाचिकः कश्चिन्नैपथ्यात्मा च कश्चन।
क्रियात्मा कश्चिदित्येवं शृङ्गारस्त्रिविधः स्मृतः॥

हास्योऽपि त्रिप्रकारः स्याद्वाङ्नैपथ्याङ्गभेतः।
वीरो युद्धदयायदानभेदेन त्रिविधो मतः॥

अद्भुतं त्रिप्रकारं स्यान्मानसाङ्गिकवाचिकैः।
अङ्गनैपथ्यवाग्भेदात्रिविधो रौद्र उच्यते ॥

करुणोऽपि त्रिधा भिन्नो मनोवागङ्गकर्मभिः।
रुधिरादिक्षोभजन्मा विष्ठाद्युद्वेगजोऽपरः॥

इति द्वेधा समाख्यातो बीभत्सो रसकोविदैः।
मानसो वाचिकश्चेति द्विधा भिन्नो भयानकः॥

भयानकः सबीभत्सस्त्रिधा वाक्कायमानसैः।
स्वाभाविको मानसः स्यादाङ्गिकः कृतको भवेत् ॥

देशकालगुणद्रव्यक्रियाजात्यात्मकेषु तु।
अनुभूतेषु भावेषु यथावत्स्थितरूपतः ॥

येन येन च भावेन यादृशो जायते रसः।
तत्तद्भावाख्यया सद्भिर्बोध्यते तादृशो रसः ॥

भावगर्भं रहः संवित् मधुरं नर्मपेशलम्।
सुवृत्तं श्रवणानन्दि शृङ्गारो वाचिको मतः ॥

वासोऽङ्गरागभूषाभिर्माल्यैर्युक्तं प्रसाधितम्।
प्राप्तयौवनमङ्गं यच्छृङ्गारः स्यात्स आङ्गिकः॥

दन्तच्छेद्यं नखच्छेद्यं मणितं च ससीत्कृतम्।
चुम्बनं चूषणं भावो हेलादिः केलयोऽपि च ॥

शयनाद्युपचारश्च तथा सङ्गीतकक्रिया ।
इत्यादिभावैः कथितः शृङ्गारः स्यात्क्रियात्मकः॥

यद्यत्प्रहसनं वाक्यं स हास्यो वाचिकः स्मृतः ।
विपर्ययेण निक्षेपो माल्याभरणवाससाम् ॥

यः स नैपथ्यजो हास्य इति निर्णीयते बुधैः ।
विकटाभिनयत्वं यदङ्गानामवलोक्यते ॥

स्वभावाद्वाऽथकपटात्स हास्यस्त्वाङ्गिको भवेत् ।
निरायुधस्याप्येकस्य हीनस्यापि परिच्छदैः॥

अभीतिर्बहुभिर्योद्धुं व्यवसायो रणे मदः ।
हर्षः शस्त्रास्त्रघातेषु समरादपलायनम् ॥

भीताभयप्रदानं च प्रपन्नस्यार्तिभञ्जनम् ।
एवं युद्धात्मको वीरः तज्ज्ञैः कविभिरीरितः॥

अर्थिनामीप्सितादर्थात्प्रदायैभ्योऽधिकं बहु ।
अर्थिनः पुनरायातान् स्वजनानितरानपि ॥

यन्मानयति दानेन वाक्येन मधुरेण च ।
एतद्दानात्मको वीरः कथ्यते दानशीलिभिः॥

व्याधिदारिद्र्यशस्त्रास्त्रक्षुत्पिपासादिपीडितान् ।
अनुगृह्णाति यः प्रीत्या स वीरः स्याद्दयात्मकः॥

ध्यानं नयनविस्तारः प्रसादो वदने दृशि ।
आनन्दाश्रु सरोमाञ्चमनिमेषावलोकनम् ॥

अनिश्चलत्वं मनसो यस्मात्तन्मानसोऽद्भुतः ।
चेलाङ्गुलीनां भ्रमणमुत्थायोत्थाय वल्गनम् ॥

दानप्रबन्धो नटनमाश्लेषश्च परस्परम् ।
परस्परस्य भुजयोः परस्परतलाहतिः॥

एवमादिविकारो यः स भवेदाङ्गिकोऽद्भुतः।
हाहाकारः साधुवादः कपोलास्फालनध्वनिः॥

उच्चैर्हासो हर्षघोषौ गीतमुच्चावचं वचः।
एवमादिर्विकारो यः स भवेद्वाचिकोद्भूतः॥

शिरोभिर्बहुभिः स्थूलैः केशैरुद्धूतपिङ्गलैः।
बाहुभिर्ह्रस्वदीर्घैश्च बहुशस्त्रास्त्रधारिभिः॥

उद्वृत्तरक्तनयनैर्महाकायैः सितेतरैः।
एवंप्रकारो रौद्रोऽयमाङ्गिकः कथ्यते बुधैः॥

कृष्णरक्तानि वासांसि कृष्णरक्तानुलेपनम्।
कृष्णरक्तानि माल्यानि कृष्णं रक्तञ्च भूषणम्॥

एवं नैपथ्यजो रौद्र इति विद्वद्भिरुच्यते।
छिन्धि भिन्धि बधानैनं खाद मारय ताडय॥

पिबामि रुधिरं तेऽद्य पिनष्टीत्यादि यद्वचः।
एतत्तु वाचिको रौद्र इति नाट्यविदीरितः॥

वाक्यार्थाननुसन्धानं निश्वासोच्छ्वासदीर्घता।
उपेक्षा केशवासोऽङ्गसंस्कारादिषु दीनता॥

अनुभूतानभिज्ञत्वमनवस्थितचित्तता।
विरक्तिः सर्वविषया स्निग्धेष्वनभिषङ्गता॥

आकाशवीक्षणञ्चेति मानसः करुणः स्मृतः।
हाकारो रोदनं क्रोशः प्रलापो दीर्घभाषणम्॥

दूराह्वानमथाक्रन्दो वाचिकः करुणः स्मृतः।
रुधिरादिषु दृष्टेषु मनः क्षुभ्यति चञ्चलम्॥

अतो हि मानसः सद्भिर्वीभत्सः क्षोभनः स्मृतः।
बिभेति म्लायति द्वेष्टिमुहुर्मुह्यति वुद्ध्यति॥

क्रन्दत्यपक्रामति च विषीदति च निन्दति।
दयते भ्राम्यति त्रस्यत्यास्ते तूष्णीं च गूहते ॥

यत्ततो मानसः क्षोभजन्मा बीभत्स उच्यते।
उद्वेगजो यो बीभत्सः स त्वाङ्गिक उदाहृतः ॥

वस्त्रावकुण्ठनं नासाच्छादनं नेत्रकूणनम्।
अस्पष्टपादपतनमपवर्तितवक्रता ॥

द्रुतपादाग्रगमनं ष्टीवनं च मुहुर्मुहुः।
एवमाङ्गिक उद्वेगजन्मा बीभत्स उच्यते ॥

दिङ्मोहः कान्दिशीकत्वं सहायान्वेषणं मुहुः।
पार्श्वयोर्वीक्षणं पाणिपादयोरपि कम्पनम् ॥

दंशोऽङ्गुलीनामभययाचनं दन्तदर्शनम्।
एतैर्भयानकस्तज्ज्ञैः कथितस्त्वाङ्गिकात्मना ॥

ऊरुस्तम्भश्च हृत्कम्पः स्वेदो दृक्चलतारका।
शुष्कोष्टताऽऽस्यशोषश्च गद्गदत्वं विवर्णता ॥

विषयस्यापरिच्छित्तिरुक्तानुक्तानभिज्ञता।
एतैर्भयानकः स्वाभाविको मानस उच्यते ॥

एवं रसविकल्पाश्च कथिताः स्वस्वरूपतः।
अधिदैवतमेतेषां भरतादिभिरुच्यते ॥

शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः।
महेन्द्रदैवतो वीरस्त्वद्भुतो ब्रह्मदैवतः ॥

रुद्राधिदैवतो रौद्रः करुणो यमदैवतः।
बीभत्सः कथ्यते सद्भिर्महाकालाधिदैवतः ॥

भयानकोऽपि कथितः कालदेवाधिदेवतः।
आभिरूप्यमधिष्टानं शृङ्गारस्य यतो भवेत् ॥

अभिरूपोत्तमो विष्णुस्तस्मादस्याधिदैवतम् ।
विकटाभिनयत्वं यद्धास्याधिष्ठानमुच्यते ॥

तदस्ति प्रमथे यस्मात्सोऽयमस्याधिदैवतम् ।
वीरस्य यदधिष्ठानं तद्धैर्यमिति गण्यते ॥

धीरो महेन्द्रो यस्मात्तु सोऽयमस्याधिदैवतम् ।
अद्भुतस्याप्यधिष्ठानं नानाशिल्पात्मिकैव धीः॥

ब्रह्मणः सेयमस्तीति सोऽयमस्याधिदैवतम् ।
रौद्रस्य यदधिष्ठानं कर्म रोगरुजात्मकम् ॥

रुद्रस्य च तदस्तीति सोऽयमस्याधिदैवतम् ।
करुणस्याप्यधिष्ठानं दयेति परिभाष्यते ॥

पापं तया यमयति यमः सोऽस्याधिदैवतम् ।
बीभत्सस्याप्यधिष्ठानं महाकालोऽसृगात्मकः॥

प्रलयेऽस्य तदस्तीति सोऽयमस्याधिदेवता ।
भयानकस्याधिष्ठानं विकृताकाररूपता ॥

कालदेवस्य संहारकालेऽस्तीति स देवता ।
श्यामः श्वेतश्च गौरश्च पीतो रक्तश्च पञ्चमः ॥

कपोतश्चैव नीलश्च कृष्णश्चेति यथाक्रमम् ।
यथाऽधिदेवतं वर्णः कथितः पूर्वसूरिभिः॥

शृङ्गारादिरसानां तु स्वरूपं जन्मनामनी ।
तद्विकल्पाश्च तद्रूपं तद्दैवं वर्णकल्पना ॥

भावानामपि कृत्यञ्च तत्स्वरूपञ्च नाम च ।
संहितोक्तेन मार्गेण तथा वासुकिवर्त्मना ॥

व्यासोक्तेनाध्वना चैव नारदाभिहितेन च ।
निर्णीतानि यथाशास्त्रं दर्शितानि यथार्थतः ॥

## 29. नायकभेदाः

विश्वनाथः– साहित्यदर्पणम् (III. 28-42)
(व्याख्याकारः– श्रीरामचरण-तर्कवागीशः)

अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह–

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः।**

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः 'विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः' इति विभावा उच्यन्ते।

तदुक्तं भर्तृहरिणा–

*शब्दोपहितरूपांस्तान्बुद्धेर्विषयतां गतान्।*
*प्रत्यक्षानिव कंसादीन्साधनत्वेन मन्यते॥*

तद्भेदावाह–

**आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ॥28॥**

स्पष्टम्।

तत्र–

**आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात् ॥29॥**

आदिशब्दान्नायिकाप्रतिनायिकादयः। अत्र यस्य रसस्य यो विभावः स तत्स्वरूपवर्णने वक्ष्यते। तत्र नायकः–

---

व्यस्तानां रत्यादिविभावादीनां कथमेकरूपत्वमत आह–**रत्यादयो हीति**। आदिना विभावादिपरिग्रहः। एतच्च शृङ्गाररसे। वीरादौ तूत्साहादयो ज्ञेयाः। **एकीभूता** व्यञ्जनाजन्यैकज्ञानविषयत्वेन एकरूपत्वं प्राप्ताः। स्फुरन्तश्चिद्रूपत्वं प्राप्नुवन्तः। सात्त्विकानुभावयोर्गोबलीवर्दन्यायेन पृथगुपादानम्। **खण्डशः** प्रत्येकम्। ननु ज्ञानतादात्म्याङ्गीकारेऽप्यखण्डत्वं न संभवति सुखचमत्काराभ्यामैक्यासंभवादत आह– **परमार्थतस्त्विति**। वस्तुतस्त्वित्यर्थः। अलौकिकस्वभावादिति यावत्। अलौकिकमेव दृष्टान्तमाह–**वेदान्तेति**।

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ॥30॥**

दक्षः क्षिप्रकारी। शीलं सद्वृत्तम्। एवमादिगुणसम्पन्नो नेता नायको भवति।

तद्भेदानाह—

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥31॥** स्पष्टम्।

तत्र धीरोदात्तः—

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।**
**स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥32॥**

अविकत्थनोऽनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्वः। दृढव्रतोऽङ्गीकृतनिर्वाहकः।

यथा—रामयुधिष्ठिरादिः।

अथ धीरोद्धतः—

**मायापरः प्रचण्डश्चपलोऽहंकारदर्पभूयिष्ठः।**
**आत्माश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥33॥**

यथा—भीमसेनादिः।

---

ब्रह्ममीमांसा वेदान्तस्तत्र यथा चिदानन्दरूपोऽयं पुरुष इत्यनेन चिदानन्दयोरेकब्रह्मरूपत्वमुपपादितं तथा चिदानन्दचमत्कारणामेकरसरूपतमिति भावः। शब्दोपहितरूपान् काव्यप्रकाशितस्वरूपान्। **बुद्धेर्व्यञ्जनाजन्यबोधस्य**। **कंसादीनिति**। वीररसाद्यालम्बनविभावाभिप्रायेण। साधनत्वेनेति विशेषणे तृतीया। **मन्यते** सामाजिकः इति शेषः॥ **तद्भेदौ** विभावप्रकारौ। **तस्य** विभावस्य॥ **नायकादिरिति**। नायको रतेर्नायकः अपलम्बनं तं नायकादिमालम्ब्य विषयीकृत्य॥ **त्यागी** दाता। कृती वीरः। कुलीनः सत्कुलोद्भवः। उत्साहः कर्मण्यध्यवसायः। रूपादित्रयवान्। निगूढाभिप्रायज्ञत्वं वैदग्ध्यम्। शीलं सद्वृत्तम्। नेता नायकः॥ तद्भेदान्नायकप्रकारान्॥ **अतिगम्भीरो** दुरवबोधाभिप्रायः। स्थेयान् कर्मणि स्थिरतरः॥

अथ धीरललितः—

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।

कला नृत्यादिका। यथा—रत्नावल्यादौ वत्सराजादिः।

अथ धीरप्रशान्तः—

**सामान्यगुणैर्भूयान्द्विजादिको धीरशान्तः स्यात् ॥34॥**

यथा—मालतीमाधवादौ माधवादिः।

एषां च शृङ्गारादिरूपत्वे भेदानाह—

**एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा।**

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः।

**एषु त्वनेकमहिलासमरागो दक्षिणः कथितः॥35॥**

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः। यथा—

*स्नाता तिष्ठति कुन्तलेश्वरसुता, वारोऽङ्गराजस्वसु-*
*र्द्यूते रात्रिरियं जिता कमलया, देवी प्रसाद्याद्य च।*
*इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते*
*देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः॥*

**कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।**
**दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः॥36॥**

---

**अहंकारः** अहं महानिति ज्ञानविशेषः। दर्पः शौर्यवीर्याद्यतिशयः। **मृदुः** अप्रचण्डचरितः॥ **सामान्यगुणैर्ना**यकसामान्यगुणैः। धीरोदात्तादित्रितयभिन्नो नायको धीरप्रशान्त इत्यभिप्रायः॥ **एषां** धीरोदात्तादीनाम्। **षोडशधेति**। शृङ्गारे षोडशप्रकारो नायको भवति रसान्तरे तु चतुष्प्रकार इत्यवधेयम्॥ **स्नाता** ऋतुस्नाता। वारः सुरतार्थं नियमितदिवसः। जिता जयेनात्मसुरतार्थं प्राप्ता। देवी कृताभिषेका राजपत्नी। देवेन राज्ञा। अप्रतिपत्त्या कर्तव्यानिश्चयेन मूढं व्याकुलम् अप्राप्तिनिश्चयशून्यं वा मनो यस्य तेन॥ **कृतागाः** कृतापराधः। मिथ्यावाक् मयैतन्न कृतमित्ययथार्थवचनं॥ तं पादम्। अत्र प्रथमपादेन कारिकायाः प्रथमपादोक्तं द्वितीयपादेन द्वितीयपादोक्तं लक्षणं वेदितव्यम्॥ **अस्माकमिति**।

यथा मम—

*शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः*
*पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि।*
*किंचित्तत्र विधातुमक्षमतया बाष्पं सृजन्त्याः सखे*
*ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः॥*

**अनुकूल एकनिरतः—**

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः। यथा—

*अस्माकं सखि वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं,*
*नो वक्रा गतिरुद्धतं न हसितं, नैवास्ति कश्चिन्मदः।*
*किंत्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो*
*दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥*

**शठोऽयमेकत्र बद्धभावो यः।**
**दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥37॥**

यः पुनरेकस्यामेघ नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठः। यथा—

*शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा*
*यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।*
*तदेतत्क्वाचक्षे घृतमधुमयत्वाद्बहुवचो-*
*विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥*

---

कस्याश्चिन्नायिकाया उक्तिरियम्। ग्रैवेयकं कण्ठभूषणम्। वक्रा चित्र। **उद्धतमुत्कटम्** सौभाग्ययौवनाद्यवलेपजो विकारो **मदः**। नायकवशीकरणकारणं मम किमपि नास्ति। **किंतु** तथापि। **अन्ये** परकीयाः। अपिना स्वकीयाः। **सुभगोऽपि** नायिकान्तरप्रियोऽपि। यद्वा मनोज्ञोऽपि। अन्यतो नायिकान्तरे। इयता एतावतैवामिथ्यावादेन। दुःस्थितं दुष्टचित्तं प्रतिकूलं या॥, बद्धभावो निभृतानुरागः। **दर्शितो** भूषणदानादिसाम्येन प्रकटितो बहिः सुरतातिरिक्तेऽनुरागो येन सः॥ **शठेति**। दूत्या वचनमिदम्। **क्वाचक्षे** कुत्र कथयामि। न कुत्रापीत्यर्थः। **घृतमधुमयेति**। घृतमधुतुल्येत्यर्थः। घृतमधु यथा आपाततः स्वादु पश्चाद्विषम्, तथा तव वचनमप्यापाततो रमणीयं पश्चादनिष्टाचरणेनायथार्थत्वप्रतिभासाद्विषतुल्यमिति

**एषां च त्रैविध्यादुत्तममध्याधमत्वेन।**
**उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च ॥38॥**

एषामुक्तषोडशभेदानाम्।

अथ प्रसङ्गादेतेषां सहायानाह—

**दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु।**
**किंचित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥39॥**

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसंगते इतिवृत्तेऽनन्तरोक्तैर्नायकसामान्यगुणैः किंचिदूनः पीठमर्दनामा सहायो भवति। यथा—रामचन्द्रादीनां सुग्रीवादयः।

अथ शृङ्गारसहायाः—

**शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।**
**भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥40॥**

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः।

**तत्र** विटः—

**संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः।**
**वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥41॥**

चेटः प्रसिद्ध एव।

**कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः।**
**हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः॥42॥**

स्वकर्म हास्यादि।

---

भावः। किमपि हितमहितं वा। गणयति निश्चिनोति॥ **एषां** नायकानाम्॥ दूरानुवर्तिनीत्यस्यार्थमाह—**बहुव्यापिनीति**। इतिवृत्ते कर्तव्यकर्मणि॥ **भक्ता** नायकानुरक्ताः। नर्मसु परिहासेषु। **शुद्धाः** परदारगमनदोषरहिताः॥ **संभोगहीना** अपकृष्टा संपद् यस्य सः। नृत्यादिकलानामेकदेशं जानाति, नतु समुदायम्। वेशस्य उपचारे [illegible] कुशलः॥ विदूषकमाह—**कुसुमेति**। **वपुरिति**।



## 30. गर्वादीनां स्थायित्वनिराकरणम्

### सिङ्गभूपालः– रसार्णवसुधाकरः (II)

**भोजेनोक्ताः स्थायिनोऽन्ये गर्वः स्नेहो धृतिर्मतिः।**
**स्थास्नुरेवोद्धतप्रायः शान्तोदात्तरसेष्वपि ॥157॥**

तत्र स्नेहो रतेर्भेदः स्त्रीपुंसेच्छात्मकत्वतः।

तथाहि–इदं खलु तेनैव प्रेयौरसवादिना महाराजेनोदाहृतं,

*यदेव रोचते मह्यं तदेव कुरुते प्रिया।*
*इति वेद्मि न जानामि तत् प्रियं यत् करोति सा ॥*

तेनैव व्याकृतं च–अत्र वत्सलप्रकृतेर्धीरललितनायकस्य प्रियालम्बनभावादुत्पन्नः स्नेहः स्थायिभावो विषयसौन्दर्यादिभरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानैर्मतिधृतिस्मृत्यादिभिर्व्यभिचारिभावैरनुभावैश्च प्रशंसादिभिः सृज्यमानो निष्पन्नः प्रेयोरस इति प्रतीयते। रतिप्रीत्योरयमेव मूलप्रकृतिरिष्यत इति। न तावदस्य स्नेहस्य रतिं प्रति मूलप्रकृतित्वं, रत्यङ्कुरदशायामस्यासंभवात्। संभोगेच्छामात्रं हि रतिः। सैव प्रेममानप्रणयाख्याभिस्तिसृभिः पूर्वदशाभिरुत्कटीभूता चतुर्थदशायां चित्तद्रवीभावलक्षणस्नेहरूपतामाप्नोति। तथा च भावप्रकाशिकायाम्–

*इयमङ्कुरिता प्रेम्णा मानात् पल्लविता भवेत्।*
*सकोरका प्रणयतः स्नेहात् कुसुमिता भवेत्॥*

इति। अतोऽस्मिन्नुदाहरणे स्नेहस्य रतिरूपेणैवास्वाद्यत्वं, न पृथक् स्थायित्वेन। एवञ्च स्नेहस्य रतिभेदत्वकथनात् प्रेयोरसस्यापि शृङ्गारादपृथक्त्वमर्थसिद्धम्।

**अन्ये पोषासहिष्णुत्वान्नैव स्थायिपदोचिताः॥158॥**

तथापि गर्वस्थायित्वमुदाहृतम्–

*अपकर्ताहमस्मीति मा ते मनसि भूद् भयम्।*
*विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥*

व्याकृतं च—अत्र मयापकारः कृत इति यत्ते चेतसि भयं, तन्मा भूत्। मम खड्गः पराङ्मुखेषु न कदाचिदपि प्रहर्तुमुत्सहत इति सर्वदैव रूढोऽहङ्कारः प्रतीयते। सोऽयं गर्वप्रकृतिरुद्धतो नाम रसो निष्पद्यत इति। न तावदत्र गर्वः, किन्तु पूर्वमपकर्तारं पश्चाद् भीतं द्विषन्तमवलोक्य जातया समरविमुखं न हन्मि मा भैषीरिति वाक्सूचितया नीचे दयया कस्यचिद् वीरसार्वभौमस्य शोभनः पौरुषसात्त्विकभावः प्रतीयते। यदि वा, अभीतमपि शत्रुं भीतो यदि तर्हि पलायस्वेत्यधिक्षिपतीति गर्व इति चेद्, अस्तु वा गर्वः। तथापि असत्यभीतिकल्पनारूपचित्ताध्यवसायप्रकाशनद्वारेण शत्रुवधक्रोधमेव पुष्णाति। किञ्च विमुखाप्रहाररूपात्मसम्भावनारूपगर्वस्यासत्यभीतिकल्पनोपबृंहणादेष भावकानां वैरस्याय न केवलं, स्वादाभावाय चेति नास्मिन्नुदाहरणे गर्वस्य स्थायित्वमुपपद्यते। धृतेः स्थायित्वमपि तेनैवोदाहृतम्। तथाहि—

*'सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम्।*
*उपनाद्गूढपादस्य ननु चर्मास्तृतेव भूः॥'*

इति। व्याकृतं च— अत्र कस्यचिदुपशान्तप्रकृतेर्धीरशान्तनायकस्य अर्थोपगमनमनोनुकूलदारादिसम्पत्तेरालम्बनविभावरूपायाः समुत्पन्नो धृतिस्थायिभावो वस्तुतत्त्वालोचनादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानस्मृतिमत्यादिभिर्व्यभिचारिभावैर्वागारम्भादिभिश्चानुभावैरनुषज्यमानो निष्पन्नः शान्तो रस इति सङ्कीर्त्यते। अन्ये पुनरस्य शमं प्रकृतिमामनन्ति। स तु धृतेरेव विशेषो भविष्यतीति। अत्र तावदनुकूलदारसिद्धिजनिताया धृतेस्तु रतिपरतन्त्रत्वमाबालगोपालप्रसिद्धम्। ननु वस्तुतत्त्वालोचनादिभिरस्याः स्थायित्वं कल्प्यत इति चेद्, न। नैःस्पृह्यवासनावासिते भावकचित्ते विभावादिष्वपि नैःस्पृह्योन्मेषाद् धृतेर्मूलच्छेदप्रसङ्गात्। अर्थसम्पत्तिजनिता धृतिस्तु अगृध्नुलक्षणलोकोत्तरत्वप्राप्तिव्यवसायरूपमुत्साहमनुसरन्ती वीरोपकरणतामाप्नोतीति नात्र धृत्तेः स्थायित्वम्। धृतिस्थायित्वनिराकरणसंरम्भेणैव नष्टस्ताद्विषयः शमस्थायी कुत्र वा लीनो न ज्ञायते। मतेः स्थायित्वं तेनैवोदाहृतम्।

तथाहि—

*'साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।*
*किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः॥'*

इति। व्याकृतं च—रामस्योदात्तप्रकृतेर्निसर्गत एव तत्त्वाभिनिवेशिनी मतिर्नान्यविषये प्रवर्तते, न च प्रवृत्तोपरमति। सा च सीतेयं मम स्वीकारयोग्येत्येवंरूपेण प्रवृत्ता रावणप्रार्थनालक्ष्मणप्रोत्साहनाभ्यामुद्दीप्यमाना समुपचीयमानचिन्तावितर्कक्रीडावहित्थस्मृत्यादिभिः कालोचितोत्तरानुमीयमानैर्विवेकचातुर्यधैर्यौदार्यादिभिः संसृज्यमानोदात्तरसत्वरूपेण निष्पद्यत इति। अत्र तावत् सीताविषया आत्मस्वीकारयोग्यत्वनिश्चयरूपा रामस्य मतिस्तु रतेरुत्पत्तिमात्रकारणमेव, तदनिश्चये रतेरनौचित्यात्। अत्र न्यायः साधारण्यनिश्चयो मतिः। तस्याः स्थायित्वमिच्छाम इति चेद्, न। सा हि रावणविषयलक्ष्मणासूयादोपनिराकरणद्वारेण कार्यकर (ण? णा) पराङ्मुखीभावलक्षणलोकोत्तरत्व(?) प्राप्तिव्यवसायरूपं रामोत्साहं भावकास्वादयोग्यता प्रोत्साहयति।

**तदष्टावेव विज्ञेयाः स्थायिनो मुनिसम्मताः।**
**स्थायिनोऽष्टौ त्रयस्त्रिंशत् सञ्चारिणोऽष्ट सात्त्विकाः॥159॥**

**एवमेकोनपञ्चाशद् भावाः स्युर्मिलिता इमे।**
**एवं हि स्थायिनो भावान् शिङ्गभूपतिरभ्यधात् ॥160॥**

**अथैषां रसरूपत्वमुच्यते शिङ्गभूभुजा।**
**विद्वन्मानसहंसेन रसभावविवेकिना ॥161॥**

**एते च स्थायिनः स्वैः स्वैर्विभावैर्व्यभिचारिभिः।**
**सात्त्विकैश्चानुभावैश्च नटाभिनययोगतः॥162॥**

**साक्षात्कारमिवानीतैः प्रापिताः स्वादुरूपताम्।**
**सामाजिकानां मनसि प्रयान्ति रसरूपताम्॥163॥**

**दध्यादिव्यञ्जनद्रव्यैश्चिञ्चादिभिरथौषधैः।**
**गुडादिमधुरद्रव्यैर्यथायोगं समन्वितैः॥164॥**

**यद्वत् पाकविशेषेण षाडवाख्यो रसः परः।**
**निष्पद्यते विभावाद्यैः प्रयोगेण तथा रसः॥165॥**

**सोऽयमानन्दसम्भेदो भावकैरनुभूयते।**

ननु नायकनिष्ठस्य स्थायिप्रकर्षलक्षणस्य रसस्य सामाजिकानुभवयोग्यता नोपपद्यते। अन्यभवस्य तस्यान्यानुभवायोगादिति चेत्, सत्यम्। को वा नायकगतं रसमाचष्टे। तथाहि– स च नायको दृष्टः श्रुतोऽनुकृतो वा रसस्याश्रयतामालम्बते। नाद्यः। साक्षाद्दृष्टनायकरत्यादेर्व्रीडाजुगुप्सादिप्रतीपफलत्वेन स्वादाभावात्। न द्वितीय-तृतीयौ तयोरविद्यमानत्वात्। नह्यसत्याश्रये तदाश्रितस्यावस्थानमुपपद्यते। ननु भवतु नामैवम्। तथापि रसस्य नटगतत्वेन सामाजिकानुभवानुपपत्तिरिति चेद्, न। नटे रससम्भवः किमनुभावादिना भावनासम्भवेन वा। नाद्यः। अभ्यासपाटवादिनापि तत्सिद्धेः। किञ्च सामाजिकेषु यथोचितमनुभावसद्भावेऽपि त्वया तेषां रसाश्रयतानङ्गीकारात्। यदि विभावेन, तत्रापि किमनुकार्यमालविकादिनानुकार्येण स्वकान्तादिना वा। नाद्यः। अनौचित्यात्। नापि द्वितीयः। नष्टे साक्षाद्दृष्टनायकवदश्लीलप्रतीतेः। ननु मालविकादिविभावविशेषस्यानौचित्याद् भावस्यासन्निहितत्वाच्च सामाजिकानामपि नटवदेवं रसाश्रयत्वं प्रसज्यत इति चेद्, अत्र केचन समादधते–विभावादिभावानामनपेक्षितबाह्यसत्त्वानां शब्दोपादानादेवासादितसद्भावानामानुकूल्यापेक्षया निस्साधारणानांमपि काव्ये नाट्ये चाभिधापर्यायेण साधारणीकरणात्मना भावनाव्यापारेण स्वसम्बन्धितया विभावितानां साक्षाद्भावकचेतसि विपरिवर्तमानानामालम्बनत्वाद्यविरोधादनौचित्यादिविप्लवरहितः स्थायी निर्भरानन्दविश्रान्तिस्वभावेन भोगेन भावकैर्भुज्यत इति।

अन्ये त्वन्यथा समाधानमाहुः– लोके प्रमदादिकारणादिभिः स्थाय्यनुमानेऽभ्यासपाटवात् सहृदयानां काव्ये नाट्ये च विभावादिपदव्यपदेश्यैरस्वसम्बन्धित्वेन च साधार(णा? ण्या)त् प्रतीतैरभिव्यक्तीभूतो वासनात्मकतया स्थितः स्थायी रत्यादिः पानकरसन्यायेन चर्व्यमाणो लोकोत्तरचमत्कारकारिपरमानन्दमिव कन्दलयन् रसरूपतामाप्नोति। एवञ्च भुक्तिव्यक्तिपक्षयोरुभयोरपि सामाजिकानां रसाश्रयत्वोपपत्तेरन्यतरपक्षपरिग्रहा-

ग्रहादुदास्महे। प्रायेण भारतीयमतानुसारिणां प्रक्रिया तु लोके कारणकार्यसहकारिरूपतामुपगतैः काव्ये नाट्ये वा रससूक्तिसुधामाधुरीधुरीणै-र्यथोक्ताभिनयसमेतैर्वा पदार्थत्वेन विभावनुभावसञ्चारिव्यपदेशं च प्रापितैर्नायिकानायकचन्द्रचन्द्रिकामलयानिलादिभ्रूविक्षेपकटाक्षपातस्वेदरोम-ञ्चादिनिर्वेदविषादादिरूपैर्वासनात्मकैरात्मसम्बन्धित्वेनाभिमतैर्भा-वैर्धर्मकीर्त्तिरतानां षडङ्गनाट्यसमयज्ञानां नानादेशवेषभाषाविचक्षणानां निखिलकलाकलापकोविदानां सन्त्यक्तमत्सराणां सकलसिद्धान्तवेदिनां रसभावविवेचकानां काव्यार्थनिहितचेतसां सामाजिकानां मनसि मुद्रामुद्रितन्यायेन विपरिवर्तिता वासिताश्चाभिवर्धिताः स्थायिनो भावाः काव्यार्थत्वेनाभिमताः बाह्यार्थावलम्बनात्मकाः सन्तो विकास-विस्तारक्षोभविक्षेपात्मकतया विभिन्नाः स्वरूपेणास्वाद्यमानाः परमानन्दरूपता-माप्नुवन्तीति सकलसहृदयहृदयसंवेदनसिद्धस्य रसस्य प्रमाणान्तरेण संसाधनपरिश्रमः श्रोतृजनचित्तक्षोभाय (न ?) केवलं, नोपयोगायेति प्रकृतमनुसरामः।

## 31. रसप्रतीतिविषये नव्यमतोपन्यासः

### जगन्नाथः–रसगङ्गाधरः (I)

नव्यास्तु 'काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायामनन्तरं च सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वाच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रसः। अयं च कार्यो दोषविशेषस्य। नाश्यञ्च तन्नाशस्य। स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाऽग्रहात्सुखपदव्यपदेश्यो भवति। स्वपूर्वोपस्थितेन रत्यादिना तदग्रहात्तद्रतित्वेनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते। अवच्छादकं दुष्यन्तत्वमप्यनिर्वचनीयमेव। अवच्छादकत्वं च रत्यादिविशिष्टबोधे विशेष्यतावच्छेदकत्वम्। एतेन-"दुष्यन्तादिनिष्ठस्य रत्यादेरनास्वाद्यत्वान्न रसत्वम्। स्वनिष्ठस्य तु तस्य शकुन्तलादिभिरतत्सं बन्धिभिः कथमभिव्यक्तिः। स्वास्मिन्दुष्यन्ताद्यभेदबुद्धिस्तु बाधबुद्धिपराहता" इत्यादिकमपास्तम्। यदपि विभावादीनां साधारण्यं प्राचीनैरुक्तं तदपि काव्येन शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषविशेषकल्पनं विना दुरुपपादम्। अतोऽवश्यकल्प्ये दोषविशेषे तेनैव स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरपि सूपपादा।

नन्वेवमपि रतेरस्तु नाम दुष्यन्त इव सहृदयेऽपि सुखविशेपजनकता, करुणरसादिषु तु स्थायिनः शोकादेर्दुःखजनकतया प्रसिद्धस्य कथमिव

---

**सैवेति**। प्रागुक्त एव मार्ग इत्यर्थः। **तन्नाशेति**। दोषविशेषनाशेत्यर्थः। **स्वपूर्वोपेति**। दुष्यन्तादौ गृहीतशकुन्तलारत्यादिनेत्यर्थः। **तदग्रहादिति**। भेदाग्रहादित्यर्थः। नन्वेवमपि कथं तद्धर्मलाभोऽत आह–**तद्रतीति**। **एतेनेति**। उक्तरीत्या सर्वोपपादनेत्यर्थः। तस्य रत्यादेः। **रज्जुसर्पादिरिति**। तद्रूपसर्पादेरित्यर्थः। **केवलेति**। दुःखामिश्रेत्यर्थः। **दुःखप्रतिबन्धेति**। सुरतकालिकदन्ताद्याघातस्येवेत्यर्थः। प्रमाणेत्यस्य सहृदयेत्यादिः। तत्र करुणप्रधानकाव्ये। द्विमीयमतेनेदमुक्तं नाद्यमतेनेत्याह– **केवलेति**। न चाद्यमतेऽश्रुपातादयो न स्युः, तेषां दुःखकार्यत्वादत आह–**अश्रुपातादयोऽपीति**। नेदं क्वचिद्दृष्टमत आह–**अत एवेति**।

सहृदयाह्लादहेतुत्वम्। प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैवौचित्यात्। न च सत्यस्य शोकादेर्दुःखजनकत्वं क्लृप्तं न कल्पितस्येति नायकानामेव दुःखम्, न सहृदयस्येति वाच्यम्। रज्जुसर्पादेर्भयकम्पाद्यनुत्पादकतापत्तेः। सहृदये रतेरपि कल्पितत्वेन सुखजनकतानुपपत्तेश्चेति चेत्। सत्यम्। शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि यदि केवलाह्लाद एव सहृदयहृदयप्रमाणकस्तदा कार्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तरकाव्यव्यापारस्यैवाह्लाद-प्रयोजकत्वमिव दुःखप्रतिबन्धकत्वममपि कल्पनीयम्। अथ यद्याह्लाद इव दुःखमपि प्रमाणसिद्धं तदा प्रतिबन्धकत्वं न कल्पनीयम्। स्वस्वकारणवशाच्चोभयमपि भविष्यति। अथ तत्र कवीनां कर्तुम्, सहृदयानां च श्रोतुम्, कथं प्रवृत्तिः? अनिष्टसाधनत्वेन निवृत्तेरुचितत्वात्। इति चेत्। इष्टस्याधिक्यादनिष्टस्य च न्यूनत्वाच्चन्दनद्रवलेपनादाविव प्रवृत्तेरुपपत्तेः। केवलाह्लादवादिनां तु प्रवृत्तिरप्रत्यूहैव। अश्रुपातादयोऽपि तत्तदानन्दानुभव-स्वाभाव्यात्, न तु दुःखात्। अत एव भगवद्भक्तानां भगवद्वर्णनाकर्ण-नादश्रुपातादय उपपद्यन्ते। न हि तत्र जात्वपि दुःखानुभवोऽस्ति। न च करुणरसादौ—स्वात्मनि शोकादिमद्दशरथादितादात्म्यारोपे यद्याह्लादस्तदा स्वप्नादौ संनिपातादौ वा स्वात्मनिं तदारोपेऽपि स स्यात्, आनुभविकं च तत्र केवलं दुःखमितीहापि तदेव युक्तमिति वाच्यम्। अयं हि लोकोत्तरस्य काव्यव्यापारस्य महिमा, यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति। विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात्। जन्यत्वं च स्वजन्यभावनाजन्यरत्यादिविषयकत्वम्। तेन रसास्वादस्य काव्यव्यापाराजन्यत्वेऽपि न क्षतिः। शकुन्तलादावगम्या-त्वज्ञानोत्पादस्तु स्वात्मनि दुष्यन्ताद्यभेदबुद्ध्या प्रतिबध्यते' इत्याहुः।

---

जात्वपीषदपि। तदारोपेऽपि शोकादिमद्दशरथादितादात्म्यारोपेऽपि। स आह्लादः। तत्र स्वप्नादौ। इहापि करुणरसादावपि। तदेव दुःखमेव। यत्प्रयोज्याः काव्यव्यापारप्रयोज्याः। प्राचीनोक्तदोषमुद्धरति—शकुन्तलादाविति। प्रागुक्तदोषमुद्धरति—स्वाप्नादिस्त्विति।

## 32. भक्तिरसस्य भावसंज्ञा

**कविकर्णपूरः–अलङ्कारकौस्तुभः (V 67-72)**
**(सम्पादकः- एस्. पी. भट्टाचार्यः) (स्वोपज्ञा व्याख्या)**

**मनोवृत्तिमयी प्रीतिर्मैत्री स्पर्शादिकोचिता।**
**निर्व्विकारा सदैकाभा सा सौहार्द्दमितीष्यते ॥67 का ॥**

सदैकाभा सदैकरूपा सा चेतोरञ्जकता सौहार्द्दम्–सा च स्त्रीसखीनां पतिसखीनाञ्च परस्परविषया।

**सैव देवादिविषया रतिर्भावश्च कथ्यते ॥ 68 का ॥**

सैव चेतोरञ्जकता–आदिशब्दाहृद्गुरुप्रभृतिश्च।

**या सम्प्रयोगविषया साऽप्यवस्थाविशेषतः।**
**पाकात् पाकान्तरं प्राप्य चरमे पर्य्यवस्यति ॥69 का ॥**

चरमे पाके यतः पाकान्तरं नास्ति, यथेक्षुरसः सितोपलापाकावधिः।

यदुक्तम्–

*यथेक्षूणां रसो ह्यामः पाकात् पाकान्तरैर्गुडः।*
*गुडोऽपि पाकतः पाके चरमे स्यात् सितोपला॥*
*तथा रतिर्भावपूर्व्वरागरागाख्यपाकतः।*
*अनुरागः स प्रणयप्रेमभ्यां पाकमागतः।*
*स्नेहपाकमथो याति महारागोऽयमुच्यते॥*

'निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिये'त्युक्ते रतेः प्रथमः पाको भावः।

कोऽसौ रसो यस्याभिव्यक्तये विभावादीनां कारणत्वमित्यपेक्षायां तत्स्वरूपमाह–

**बहिरन्तःकरणयोर्व्यापारान्तररोधकम्।**
**स्वकारणादिसंश्लेषि चमत्कारि सुखं रसः ॥ 70 का ॥**

अयन्तूत्तमप्रकृतीनामनुकार्य्याणां स्वतःसिद्ध एव काव्यादौ तु सामाजिकानामेव—तेषां सर्व्वरसाभिव्यक्तिशाल्येक एव पूर्व्वोक्तः कश्चनास्वादकन्दश्चेतोधर्म्मविशेषः स्थायी। तत्र युक्तिर्द्दर्शयिष्यते।

**रसस्यानन्दधर्म्मत्वादैकध्यं, भाव एव हि।**
**उपाधिभेदान्नानात्वं, रत्यादय उपाधयः ॥ 71 का ॥**

रत्यादयः स्थायिनः। यथा नानाविधशरावसलिलतारतम्येऽपि तरणि बिम्बप्रतिबिम्ब एक एव, तथोपाधिगत एव भेदः, नानन्दगतो रसस्य। उक्तप्रकारेषु स्थायिषु कश्चिदुभयनिष्ठः, कश्चिदेकनिष्ठ उभयनिष्ठश्च। तत्र रत्यादिरुभयनिष्ठः, जुगुप्साऽदिरेकनिष्ठः, क्रोधादिरेकनिष्ठो द्विनिष्ठश्च—इत्यनुकार्य्याणामेव, सामाजिकानामेक एवेत्युक्तत्वात्।

**प्राकृताप्राकृताभासभेदादेष त्रिधा मतः ॥ 72 का ॥**

एष रसः प्राकृतो लौकिको मालतीमाधवादिनिष्ठः, अप्राकृतः श्रीकृष्ण-राधाऽदिनिष्ठः। आभासस्त्वनौचित्यादिप्रवर्त्तितः। स चाभासस्त्रिविधः प्रसिद्धकृत्रिमसिद्धभेदात्। आद्यः प्राक् प्रसिद्धिमात्रोपहतः, न तु सम्पत्स्य-मानः स च रसाभासो भवन्नपि रसपोषकः— यथा नन्दनसम्बन्धप्रसिद्धौ मालत्या माधवे रतिपुष्टिरिति प्राकृते, अप्राकृते तु शिशुपालसम्बन्धप्रसिद्धौ श्रीरुक्मिण्याः श्रीकृष्णे रतिपुष्टिः। कृत्रिमस्तु नन्दनं प्रति मालतीवेशधारिणो मकरन्दस्य वाम्यप्रकटनादिः। सिद्धस्त्वनौचित्यप्रवर्त्तित एव—अनौचित्यञ्चैकस्या अनेककान्तनिष्ठत्वम्; यदुक्तम्—

*यद्यप्ययं रसाभासः परोढरमणीरतिः।*
*तथापि ध्वनिवैशिष्ट्यादुत्तमं काव्यमेव तत् ॥ इति*

*तथापि 'रसो भावस्तदाभासो भावशान्त्यादिरक्रमः (35 का)*

इत्याद्युक्तदिशा 'आभासोऽपि चमत्कारदशायां ध्वनिभाग् भवेत्' इति ध्वनिमर्य्यादयैवोत्तमकाव्यत्वं, न त्वनौचित्यरीत्या—इति प्राकृते, अप्राकृते तु परोढरमणीरतिरेव सर्व्वोत्तमतया भूयसी श्रूयते, न तस्या अनौचित्यप्रवर्त्तित्वम्, अलौकिकत्वसिद्धेर्भूषणमेव न तु दूषणमिति न्यायात्, तर्कागोचरत्वाच्च ।

तथा च–

*अलौकिकाश्च ये भावा न तांस्तर्केण योजयेत्।* इति च

व्रजवधूनां कृष्णैकतानमानसत्वेन स्वपतिनिष्ठत्वाभावात्तेषाञ्च मायाकलिततच्छायाऽनुशीलनेन तदङ्गसङ्गमात् प्रत्युत केवलानुराग-मात्रोपाधितया चेतोरञ्जकतया शुद्धत्वमेव।

अत्र रसग्रन्थे काव्यमधिकृत्यैव विचारः। काव्यं दृश्यं श्रव्यञ्च। **दृश्ये** शब्दोपात्ता विभावादयोऽभिनायकाश्रया अभिनेयाश्रयाश्च, श्रव्ये केवलं शब्दोपात्ताः। कुतोऽचानुकार्य्यगतो रसः? नाप्यनुकर्त्तृगतः।

# 33. भक्तिरसविवेचनम्

## मधुसूदनसरस्वती–भक्तिरसायनम् (व्याख्या स्वोपज्ञा)

नवरसमिलितं वा केवलं वा पुमर्थं
परममिह मुकुन्दे भक्तियोगं वदन्ति।
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं
तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ॥1॥

संसाररोगेण वलीयसा चिरं
निपीडितैस्तत्प्रशमेऽतिशिक्षितम्।
इदं भवद्भिर्बहुधा व्ययातिगं
निपीयतां भक्तिरसायनं बुधाः ॥2॥

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥3॥

चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम्।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥4॥

तस्मादस्य ग्रन्थस्य नामकनथद्वारा प्रयोजनमुपदिशति–**संसारेति**। स्पष्टम्॥2॥

भगवद्भक्ते रसरूपतया पुमर्थतां वक्तुं प्रथमं सामान्यलक्षणमाचष्टद्रुतस्येति। भगवद्धर्मोऽत्र भगवद्गुणश्रवणम्। न तु धर्मबुद्ध्या तदनुष्ठानपर्यन्तं विवक्षितम्।

*तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्।*

इत्यत्रापि केनाप्युपायेनेति धर्मबुद्ध्याऽनुष्ठितेनायत्नसिद्धेन वा भगवद्गुणश्रवणेनेत्यर्थः। तेन शिशुपालादौ नाव्याप्तिः भगवद्गुणश्रवणेन वक्ष्यमाणकामक्रोधाद्युद्दीपनद्वारा द्रवावस्थां प्राप्तस्य चित्तस्य धारावाहिकी या सर्वेशविषया वृत्तिः। भगवदाकारतेत्यर्थः। तदाकारतैव हि सर्वत्र

वृत्तिशब्दार्थोऽस्माकं दर्शने। सा भक्तिरित्यभिधीयते शास्त्रविद्भिः। तथा च शास्त्रम्—

*मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।*
*मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ।*
*लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥*

अत्राविच्छिन्नेति धारावाहिकता दर्शिता। यथा गङ्गाम्भस इति दृष्टान्तेन दार्ष्टान्तिकेऽपि मनसि द्रवावस्था। मयि सर्वगुहाशये मनोवृत्तिरिति सर्वेशाकारता। तेनाद्रवावस्थायां धारावाहिक्यपि वृत्तिर्द्रवावस्थायामप्याशुविनाशिनी सा, द्रवत्वधारावाहिकत्वयुक्ताप्यसर्वेशविषया न भक्तिरित्युक्तम् ॥3॥

तदेव स्पष्टयितुं चित्तचेष्टिमाचष्टे—**चित्तेति**। जतुनो हि दहनात्मकतापकयोगमन्तरेण काठिन्यशान्तिर्न भवति, सौरालोकादियोगे – तु

**कामक्रोधभयस्नेहहर्षशोकदयादयः।**
**तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ॥5॥**

**द्रुते चित्ते विनिक्षप्तस्वाकारो यस्तु वस्तुना।**
**संस्कार-वासना-भाव-भावनाशब्दभागसौ ॥6॥**

**शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः।**
**न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥7॥**

**द्रवतायां प्रविष्टं सद्यत् काठिन्यदशां गतम्।**
**चेतः, पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥8॥**

**स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते।**
**व्यक्तश्च रसतामेति परानन्दतया पुनः ॥9॥**

**भगवान् परमानन्दस्वरूपः स्वयमेव हि।**
**मनोगतस्तदाकारो रसतामेति पुष्कलम् ॥10॥**

शिथिलीभावमात्रं न द्रुतिरिति सर्वसिद्धम्। एवं चित्तस्यापि वक्ष्यमाणकामादिविषयात्मकतापकसंयोगं विना न द्रवीभावो, विषयमात्रसंयोगे तु शिथिलीभावमात्रमिति तापकपदोपादानेन सूचितम् ॥4॥

तानेव तापकानाह—**कामेति**। एषां प्रत्येकं लक्षणं भेदांश्च वक्ष्यति। यद्विषये कामादीनामुद्रेकस्तद्विषये चित्तस्य द्रवीभावः। पुनर्विषयान्तरसञ्चारादिना कामादितिरोभावे काठिन्यमेवेत्यर्थः ॥5॥

द्रवीभावप्रयोजनमाह—**द्रुत**-इति। न तु विनश्यता ज्ञानेन जनितस्तार्किकादिपरिकल्पित आत्मगुण इत्यर्थः ॥6॥

जतुनः पुनः काठिन्यापनयनेन काष्ठादिसंयोगे जायमाने यथा स एव रङ्गः प्रतिभासते, शैथिल्यावस्थाप्रविष्टस्तु रङ्गो न तथा। एवं द्रवावस्थे चेतसि यद्वस्तुस्वरूपं प्रविष्टं सत् काठिन्यदशापर्यन्तं स्थितं तत् पुनर्द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि प्रकाशमानत्वाच्चेतसा न त्यज्यते। अतस्सा वासनेत्युच्यते शैथिल्यावस्थाप्रविष्टन्तु काठिन्यावस्थापर्यन्तं न तिष्ठति, तिष्ठद्वा विषयान्तरग्रहणसमये चित्तेन त्यज्यत इति स वासनाभास इत्यर्थः। अत एव यस्यैकदा द्रुते चित्ते भगवदाकारता प्रविष्टा, स सर्वदा तद्भानात् कृतकृत्यो भवतीत्युक्तम्—

*सर्वभूतेषु यः पश्येद्भावमात्मनः।*
*भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥इति॥*

सर्वभूतग्रहणसमयेऽपि द्रवावस्थाप्रविष्टभगवदाकारताया एव प्रकाशमानत्वाज्जतुरङ्गवत् सर्वभूतेषु भगवद्भानोपपत्तिः। स च भागवतोत्तमः, एतादृशसंस्कारस्याविनाशित्वादिति भावः। अत एव ब्रह्मविदेवैतादृश इत्यपास्तम्, तस्य ब्रह्मविदो द्रवावस्थायां अनपेक्षितत्वेनोत्तममध्यमप्राकृतभक्तेष्वगणनीयत्वात्। अत्र तु द्रवावस्थापरिपुष्टौ "सर्वभूतेषु यः पश्येद्" इत्यवस्थायां भागवतोत्तम उक्तः। ईषद्द्रवावस्थायांतु वासनाभासेन—

*ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।*
*प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥46॥*

इत्युक्तः, एतादृगवस्थावतोऽग्रे द्रवावस्थाया उत्पत्स्यमानत्वादित्यर्थः। यस्य तु चित्ते न द्रवावस्था पुष्टा, नापीषदुत्पन्ना, किन्तु स्वयं तदर्थं भागवतधर्माञ्छ्रद्धयाऽनुतिष्ठति, स काठिन्यावस्थाविनाशसामग्रीविशिष्टः–

*अर्चायामेव हरये पूजां यः श्रद्धयेहते।*
*न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥47॥*

इत्युक्तः। प्रकृतिरारम्भस्तस्यां वर्तमानः प्राकृतः। साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः। इयमेव च द्रवावस्था प्रणयानुरागस्नेहादिशब्दैरपि सङ्कीर्त्यते। यथा–

*विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः।*
*प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः॥54॥*

प्रणयो द्रवावस्था स एव रशना रज्जुवद्बन्धनसाधनम्, तस्यां द्रवावस्थायां प्रविष्टस्य पुनर्निर्गमनाभावादित्यर्थः। द्रवावस्थाप्रविष्टभगवत्स्वरूपभानस्य त्रिविधत्वादुत्तमभागवतोऽपि त्रिविधः। तत्राद्यं प्रपञ्चसत्यत्वभानसहितं यथा–

*खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वादि दिशो द्रुमादीन्।*
*सरित् समुद्रांश्च हरेश्शरीरं यत्किञ्चभूतं प्रणमेदनन्यः॥41॥*

इत्यादि। अनेन प्राकृतो भागवतोत्तमः। द्वितीयं प्रपञ्चमिथ्यात्वभानसहितं यथा–

*तस्मादिदञ्जगदशेषमसत्स्वरूप*
*स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।*
*त्वय्येव नित्यसुखबोधतनावनन्ते*
*मायात उद्यदपि यत् सदिवावभाति ॥22॥*

अनेन मध्यमो भागवतोत्तमः । तृतीयं प्रकारद्वयेनापि प्रपञ्चभानरहितं यथा–

*ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा।*
*औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥17॥*

*प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः।*
*आनन्दसम्प्लवे लीनो नापश्यमुभयम्मुने ॥18॥*

अनेनोत्तमो भागवतोत्तमः। निरन्तरसाधनाभ्यासपरिपाकेणोत्तम-भूमिलाभः ॥8॥

द्रवावस्थाप्रविष्टविषयाकारस्यानपायित्वे स्थायिशब्दोऽपि तत्र मुख्य एव न पारिभाषिक इत्याह—**स्थायीति**।

विभावानुभावव्यभिचारिसंयोगेनाभिव्यक्तः स्थायिभाव एव सभ्याभिनेययोर्भेदतिरोधानेन सभ्यगत एव सन् परमानन्दसाक्षात्काररूपेण रसतामाप्नोतीति रसविदां मर्यादा। तदुक्तमाचार्यभरतेन—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। अतो भक्तेरपि रसतां वक्तुं स्थायिभावो निरूप्यत इति भावः ॥9॥

# 34. भक्तिरसानन्दवर्णनम्

रूपगोस्वामी– भक्तिरसामृतसिन्धुः (II 1-36)

1– प्रबलमनन्याश्रयिणा निषेवितः सहजरूपेण।
अघदमनो मधुरायां सदा सनातनतनुर्जयति ॥

2– रसामृताब्धेर्भागेऽस्मिन् द्वितीये दक्षिणाभिधे।
सामान्यभगवद्भक्तिरसस्तावदुदीर्य्यते ॥

3– अस्य पञ्च लहर्य्यः स्युर्विभावाख्याऽग्रिमा मता।
द्वितीया त्वनुभावाख्या तृतीया सात्त्विकाभिधा ॥

4– व्यभिचार्य्यभिधा तुर्य्या स्थायिसंज्ञा च पञ्चमी।
अथास्याः केशवरतेर्लक्षिताया निगद्यते।
सामग्रीपरिपोषेण परमा रसरूपता ॥

5– विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः।
एषा कृष्णरतिः स्थायी भावो भक्तिरसो भवेत् ॥

6– प्राक्तन्याधुनिकी चास्ति यस्य सद्भक्तिवासना।
एष भक्तिरसास्वादस्तस्यैव हृदि जायते ॥

7– भक्तिनिर्धूतदोषाणां प्रसन्नोज्ज्वलचेतसाम्।
श्रीभागवतरक्तानां रसिकासङ्गरङ्गिणाम् ॥

8– जीवनीभूतगोविन्दपादभक्तिसुखश्रियाम्।
प्रेमान्तरङ्गभूतानि कृत्यान्येवानुतिष्ठताम् ॥




9– भक्तानां हृदि राजन्ती संस्कारयुगलोज्ज्वला।
रतिरानन्दरूपैव नीयमाना तु रस्यताम् ॥

10–कृष्णादिभिर्विभावाद्यैर्गतैरनुभवाध्वनि।
प्रौढानन्दचमत्कारकाष्ठामापद्यते पराम् ॥

11–किं तु प्रेमा विभावाद्यैः स्वल्पैर्नीतोऽप्यणीयसीम्।
विभावनाद्यवस्थां तु सद्य आस्वाद्यतां व्रजेत् ॥

12–ये कृष्णभक्तमुरलीनादाद्या हेतवो रतेः।
कार्य्यभूताः स्मिताद्याश्च तथाऽष्टौ स्तब्धताऽऽदयः॥

13–निर्वेदाद्याः सहायाश्च ते ज्ञेया रसभावने।
विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः॥

14–तत्र ज्ञेया विभावास्तु रत्यास्वादनहेतवः।
ते द्विधाऽऽलम्बना एके तथैवोद्दीपनाः परे॥

15–कृष्णश्च कृष्णभक्ताश्च बुधैरालम्बना मताः।
रत्यादेर्विषयत्वेन तथाऽऽधारतयाऽपि च॥

16–नायकानां शिरोरत्नं कृष्णस्तु भगवान् स्वयम्।
यत्र नित्यतया सर्वे विराजन्ते महागुणाः।
सोऽन्यरूपस्वरूपाभ्यामस्मिन्नालम्बनो मतः॥

17–आवृतं प्रकटं चेति स्वरूपं कथितं द्विधा॥

तत्रावृतं–

18–अन्यवेषादिनाऽऽच्छन्नं स्वरूपं प्रोक्तमावृतम्॥

19–अयं नेता सुरम्याङ्गः सर्वसल्लक्षणान्वितः।
रुचिरस्तेजसा युक्तो बलीयान् वयसाऽन्वितः॥

20–विविधाद्भुतभाषावित् सत्यवाक्यः प्रियंवदः।
वावदूकः सुपाण्डित्यो बुद्धिमान् प्रतिभाऽन्वितः॥

21–विदग्धश्चतुरो दक्षः कृतज्ञः सुदृढव्रतः।
देशकालसुपात्रज्ञः शास्त्रचक्षुः शुचिर्वशी॥

22–स्थिरो दान्तः क्षमाशीलो गभीरो धृतिमान् समः।
वदान्यो धार्म्मिकः शूरः करुणो मान्यमानकृत्॥

23–दक्षिणो विनयी ह्रीमान् शरणागतपालकः।
सुखो भक्तसुहृत् प्रेमवश्यः सर्वशुभङ्करः॥

24–प्रतापी कीर्तिमान् रक्तलोकः साधुसमाश्रयः।
नारीगणमनोहारी सर्वाराध्यः समृद्धिमान्॥

25–वरीयानीश्वरश्चेति गुणास्तस्यानुकीर्तिताः।
समुद्रा इव पञ्चाशद् दुर्विगाहा हरेरमी॥

26–जीवेष्वेते वसन्तोऽपि बिन्दुबिन्दुतया क्वचित् ।
परिपूर्णतया भान्ति तत्रैव पुरुषोत्तमे ॥

27–तथा हि पाद्मे पार्वत्यै शितिकण्ठेन तद्गुणाः ।
कन्दर्पकोटिलावण्या इत्याद्याः परिकीर्त्तिताः॥

28–एत एव गुणाः प्रायो धर्म्माय वनमालिनः ।
पृथिव्या प्रथमस्कन्धे प्रथयाञ्चक्रिरे स्फुटम् ॥

29–अथ पञ्च गुणा ये स्युरंशेन गिरिशादिषु ॥

30–सदास्वरूपसम्प्राप्तः सर्वज्ञो नित्यनूतनः ।
सच्चिदानन्दसान्द्राङ्गः सर्वसिद्धिनिषेवितः॥

31–अथोच्यन्ते गुणाः पञ्च ये लक्ष्मीशादिवर्त्तिनः ।
अविचिन्त्यमहाशक्तिः कोटिब्रह्माण्डविग्रहः॥

32–अवतारावलीबीजं हतारिगतिदायकः ।
आत्मारामगणाकर्षीत्यमी कृष्णे किलाद्भुताः॥

33–सर्व्वाद्भुतचमत्कारलीलाकल्लोलवारिधिः ।
अतुल्यमधुरप्रेममण्डितप्रियमण्डलः॥

34–त्रिजगन्मानसाकर्षी मुरलीकलकूजितैः ।
असमानोर्ध्वरूपश्रीर्विस्मापितचराचरः॥

35–लीलाप्रेम्णा प्रियाधिक्यं माधुर्य वेणुरूपयोः ।
इत्यसाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम् ॥

36–एवं गुणाश्चतुर्भेदाश्चतुःषष्टिरुदाहृताः ।
सोदाहरणमेतेषां लक्षणं क्रियते क्रमात् ॥

# 35. कवेः वर्णन रसवत्ता, कविचर्या च

## राजशेखरः–काव्यमीमांसा (IX- X)

'अस्तु नाम निःसीमाऽर्थसार्थः । किन्तु रसवत एव निवन्धो युक्तो न नीरसस्य' इत्यापराजितिः ।

यदाह–

मज्जनपुष्पावचयनसन्ध्याचन्द्रोदयादिवाक्यमिह ।
सरसमपि नातिबहुलं प्रकृतरसानन्वितं रचयेत्॥

यस्तु सरिदद्रिसागरपुरतुरगरथादिवर्णने यत्नः ।
कविशक्तिख्यातिफलो विततधियां नो मतः स इह ॥

'आम्' इति यायावरीयः। अस्ति चानुभूयमानो रसस्यानुगुणो विगुणश्चार्थः, काव्ये तु कविवचनानि रसयन्ति विरसयन्ति च नार्थाः। अन्वयव्यतिरेकाभ्यां चेदमुपलभ्यते। तत्र सरिद्वर्णनरसवत्ता–

एतां विलोकय तनूदरि ताम्रपर्णी-
मम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।
यस्याः पयांसि परिणाहिषु हारमूर्त्या
वामभ्रुवां परिणमन्ति पयोधरेषु ॥

अद्रिवर्णनरसवत्ता–

एतास्ता मलयोपकण्ठसरितमेणाक्षि रोधोभुव -
श्चापाभ्यासनिकेतनं भगवतः प्रेयो मनोजन्मनः ।
यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः
पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कण्ठं चकोराङ्गना ॥

सागरवर्णनरसवत्ता–

धत्ते यत्किलकिञ्चतैकगरुतामेणीदृशां वारुणी
वैधुर्यं विदधाति दम्पतिरुपां यच्चन्द्रिकार्द्रं नभः ।
यच्च स्वर्गसदां वयः स्मरसुहृन्नित्यं सदा सम्पदां
यल्लक्ष्मीरधिदैवतं च जलधेस्तत्कान्तमाचेष्टितम् ॥

एवं पुरतुरगादिवर्णनरसवत्तापि। विप्रलम्भेऽप्यतिरसवत्ता–

**विधर्माणो भावास्तदुपहितवृत्तेर्न धृतये**
**सरूपत्वादन्ये विहितविफलौत्सुक्यविरसाः।**
**ततः स्वेच्छं (स्त्वित्थं) पूर्वेष्वरसमितरेभ्यः प्रतिहतं**
**क्व हीनं प्रेयस्या हृदयमिदमन्यत्र रमताम् ॥**

**कुकविर्विप्रलम्भेऽपि रसवत्तां निरस्यति।**
**अस्तु वस्तुषु मा वा भूत्कविवाचि रसः स्थितः॥**

"यथा तथा वाऽस्तु वस्तुनो रूपं, वक्तृप्रकृतिविशेषायत्ता तु रसवत्ता। तथा च यमर्थं रक्तः स्तौति तं विरक्तो विनिन्दति। मध्यस्थस्तु तत्रोदास्ते" इति पाल्यकीर्तिः।

**येषां वल्लभया समं क्षणमिव स्फारा क्षपा क्षीयते**
**तेषां शीततरः शशी विरहिणामुल्केव सन्तापकृत्।**
**अस्माकं न तु वल्लभा न विरहस्तेनोभयभ्रंशिना-**
**मिन्दू राजति दर्पणाकृतिरयं नोष्णो न वा शीतलः॥**

"विदग्धभणितिभङ्गिनिवेद्यं वस्तुनो रूपं न नियतस्वभावम्" इत्यवन्तिसुन्दरी। तदाह–

**वस्तुस्वभावोऽत्र कवेरतन्त्रं**
**गुणागुणावुक्तिवशेन काव्ये।**
**स्तुवन्निबन्धात्यमृतांशुमिन्दुं**
**निन्दंस्तु दोषाकरमाह धूर्तः॥**

'उभयमुपपन्नम्' इति यायावरीयः।

स पुनर्द्विधा। मुक्तकप्रबन्धविपयत्वेन। तावपि प्रत्येकं पञ्चधा। शुद्धः, चित्रः, कथोत्थः, संविधानकभूः, आख्यानकवांश्च (इति)। तत्र मुक्तेतिवृत्तः शुद्धः। स एव सप्रपञ्चश्चित्रः। वृत्तेतिवृत्तः कथोत्थः। सम्भावितेतिवृत्तः संविधानकभूः। परिकल्पितेतिवृत्तः आख्यानकवान्। तत्र–

मुक्तके–शुद्धः–

सा पत्युः प्रथमापराधकरणे शिक्षोपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिचित्रां गतिम्।
स्वच्छैरच्छकपोलभित्तिगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः॥

चित्रः–

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणा
च्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि॥

कथोत्थः–

दत्त्वा रुद्धगतिः खसाधिपतये देवीं ध्रुवस्वामिनीं
यस्मात्खण्डितसाहसो निववृते श्रीशर्मगुप्तो नृपः।
तस्मिन्नेव हिमालये गुरुगुहाकोणक्वणत्किन्नरे
गीयन्ते तव कार्त्तिकेयनगरस्त्रीणां गणैः कीर्त्तयः॥

संविधानकभूः–

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासवलत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

यथा च–

कुर्वत्या कुङ्कुमाम्भः कपिशितवपुषं यत्तदा राजहंसीं
क्रीडाहंसो मयाऽसावजनि विरहितश्चक्रवाकीभ्रमेण।
तस्यैतत्पाप्मनो मे परिणमति फलं यत्पुरे प्रेमबन्धा-
देकत्रावां वसावो न च दयित दृशाऽप्यस्ति नौ सन्निकर्षः॥

आख्यानकवान्–

अर्थिजनार्थधृतानां वनकरिणां प्रथमकल्पितैर्दशनैः ।
चक्रे परोपकारी हैहयजन्मा गृहं शम्भोः ॥

निबन्ध (न्धे) शुद्धः–

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चदाकुञ्चितानां
सुचिरमहमभूवं पात्रमालोकितानाम् ॥

चित्रः–

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥

कथोत्थः–

अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रिया-
मभिशप्तः फलमेतदन्वभूत् ॥

संविधानकभूः–

क्रोधं प्रभो संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥

आख्यानकवान्–

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशी-
र्माल्येन तां निर्वचनं जघान ॥

किञ्च संस्कृतवत्सर्वास्वपि भाषासु यथासामर्थ्यं यथारुचि यथाकौतुकं चावहितः स्यात्। शब्दार्थयोश्चाभिधानाभिधेयव्यापारप्रगुणतामवबुध्येत। तदुक्तम्—

**एकोऽर्थः संस्कृतोक्त्या ससुकविरचनः प्राकृतेनापरोऽस्मि-**
**न्नन्योऽपभ्रंशगीर्भिः किमपरमपरो भूतभाषाक्रमेण।**
**द्वित्राभिः कोऽपि वाग्भिर्भवति चतसृभिः किञ्च कश्चिद्विवेक्तुं**
**यस्येत्थं धीः प्रगल्भा स्नपयति सुकवेस्तस्य कीर्त्तिर्जगन्ति॥**

इत्थङ्कारं घनैरर्थैर्व्युत्पन्नमनसः कवेः।
दुर्गमेऽपि भवेन्मार्गे कुण्ठिता न सरस्वती॥

**इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे अर्थानुशासने अर्थव्याप्तिर्नवमोऽध्यायः॥**

## दशमोऽध्यायः कविचर्या राजचर्या च।

गृहीतविद्योपविद्यः काव्यक्रियायै प्रयतेत। नामधातुपारायणे, अभिधानकोशः, छन्दोविचितिः, अलङ्कारतन्त्रं च काव्यविद्याः। कलास्तु चतुःषष्टिरुपविद्याः। सुजनोपजीव्यकविसन्निधिः, देशवार्ता, विदग्धवादो, लोकयात्रा, विद्वद्गोष्ठ्यश्च काव्यमातरः पुरातनकविनिबन्धाश्च। किञ्च—

*स्वास्थ्यं प्रतिभाऽभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता।*
*स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य॥*

अपि च नित्यं शुचिः स्यात्। त्रिधा च शौचं वाक्शौचं, मनःशौचं, कायशौचं च। प्रथमे शास्त्रजन्मनी। तार्तीयीकं तु सनखच्छेदौ पादौ, सताम्बूलं मुखं, सविलेपनमात्रं वपुः, महार्हमनुल्बणं च वासः, सकुसुमं शिर इति। शुचि शीलनं हि सरस्वत्याः संवननमामनन्ति। स यत्स्वभावः कविस्तदनुरूपं काव्यम्। यादृशाकारश्चित्रकरस्तादृशाकारमस्य चित्रमिति प्रायोवादः। स्मितपूर्वमभिभाषणं, सर्वत्रोक्तिगर्भमभिधानं सर्वतो रहस्यान्वेषणं, परकाव्यदूषणवैमुख्यमनभिहितस्य, अभिहितस्य तु यथार्थमभिधानम्।



## 36. काव्यदोषभेदाः

भोजः – सरस्वतीकण्ठाभरणम् ( I. 1.58)

ध्वनिर्वर्णः पदं वाक्यमित्यास्पदचतुष्टयम् ।
यस्याः सूक्ष्मादिभेदेन वागूदेवीं तामुपास्महे॥1॥

निर्दोषं गुणवत् काव्यमलङ्कारैरलंकृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति॥2॥

दोषाः पदानां वाक्यानां वाक्यार्थानां च षोडश ।
हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे॥3॥

असाधु चाप्रयुक्तश्च कष्टश्चानर्थकश्च यत् ।
अन्यार्थकमपुष्टार्थमसमर्थं तथैव च॥4॥

अप्रतीतमथ क्लिष्टं गूढं नेयार्थमेव च ।
सन्दिग्धश्च विरुद्धश्च प्रोक्तं यच्चाप्रयोजकम्॥5॥

देश्यं ग्राम्यमिति स्पष्टा दोषाः स्युः पदसंश्रयाः ।
अथैषां लक्षणं सम्यक् सोदाहरणमुच्यते॥6॥

शब्दशास्त्रविरुद्धं यत् तदसाधु प्रचक्षते ।

यथा,–*भूरिमारभराक्रान्त बाधति स्कन्ध एष ते ।*
*तथा न बाधते स्कन्धो यथा बाधति बाधते॥*

अत्र बाधतेरात्मनेपद्वित्वाद्बाधते इति स्यान्न पुनर्बाधतीति ।

कविभिर्न प्रयुक्तं यदप्रयुक्तं तदुच्यते ॥7॥

यथा,–*कामचीकमथाः केऽमी त्वामजिह्रायकीयिषन्*
*स सस्ति किं वचन्तीमे शम्बः कम्बं धरिष्यति॥*

अत्राचीकमथाः अजिह्नायकीयिषन् सस्ति वचन्ति धरिष्यति शम्बः कम्बमिति शब्दानुशासनसिद्धान्यपि कविभिर्न प्रयुज्यन्ते।

**पदं श्रुतेरसुखदं कष्टमित्यभिशब्दितम्।**

यथा,—*वर्वर्ष्टि जलदो यत्र तत्र दर्द्धर्ष्टि चातकः।*
*पोफुल्लिनीपः कालोऽयं चर्कर्ति हृदयं मम ॥*

अत्र **वर्वर्ष्ट्यादीनि क्रियापदानि श्रुत्यसुखदानि श्रूयन्ते।**

**पादपूरणमात्रार्थमनर्थकमुदाहृतम् ॥8॥**

यथा,—*बिभर्ति यश्च देहार्द्धे प्रियामिन्दुं हि मूर्द्धनि।*
*स वै देवः खलु त्वान्तु पुनातु मदनान्तकः॥*

**अत्र च हि वै खलु तु इत्येतानि पदानि पादानेव पूरयन्ति।**

**रूढिच्युतं पदं यत्तु तदन्यार्थमिति श्रुतम्।**

यथा,— *विभजन्ते न ये भूपमालभन्ते न ते श्रियम्।*
*आवहन्ति न ते दुःखं प्रस्मरन्ति न ये प्रियाम्॥*

अत्र विभजतेर्वण्टने आलभतेर्मारणे आवहतेः करणे प्रस्मरतेर्विस्मरणे रूढिः। न तु विशेषसेवायामभितो लाभे समन्ताद्वहने प्रकृष्टस्मरणे चेति।

**यत्तु तुच्छाभिधेयं स्यादपुष्टार्थं तदुच्यते ॥9॥**

यथा,—*शतार्द्धपञ्चाशभुजो द्वादशार्द्धार्द्धलोचनः।*
*विंशत्यर्द्धार्द्धमूर्द्धा वः पुनातु मदनान्तकः॥*

अत्र दशबाहुस्त्रिलोचनः पञ्चवक्त्र इति तुच्छमेवाभिधेयम् अतुच्छशब्दैरुक्तमिति अपुष्टार्थम्॥

**असङ्गतं पदं यत्तदसमर्थं तदुच्यते।**

यथा,— *जलं जलधरे क्षारमयं वर्षति वारिधिः।*
*इदं बृंहितमश्वानां ककुद्मानेषु ह्रेषते ॥*

अत्र जलधरो मेघः, वारिधिः समुद्रः, बृहितं गजानां, ह्रेषितमश्वानामिति लोकप्रसिद्धं तदिह समुद्रमेघाश्ववृषभविषयतया प्रयुज्यमानमसङ्गतार्थत्वादवाचकमित्यसमर्थम्।

**अप्रतीतं तदुद्दिष्टं प्रसिद्धं शास्त्र एव यत् ॥10॥**

यथा,—*किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः।*
*गुणनान्तरीयकं च प्रेमेति न तेऽस्त्युपालम्भः॥*

अत्र रूपस्कन्धनान्तरोयकशब्दयोः शास्त्र एव प्रसिद्धत्वादन्यत्राप्रतीयमानयोः प्रयोगादिदमप्रतीतम् ॥

**दूरे यस्यार्थसंवित्तिः क्लिष्टं नेष्टं हि तत् सताम्।**

यथा,—*विजितात्मभवद्वेषिगुरुपादहतो जनः।*
*हिमापहामित्रधरैः व्याप्तं व्योमाऽभिनन्दति ॥*

अत्र विना गरुत्मता जित इन्द्रस्तस्यात्मभवोऽर्जुनस्तस्य द्वेषी कर्णस्तस्य गुरुः सूर्यास्तस्यपादैरभिहतो लोकः आकाशमभिनन्दति। कीदृशं, हिमापहो वह्निः तस्यामित्रो जलं तद्धारयन्ति ये मेघास्तैर्व्याप्तमिति व्यवहितार्थप्रत्ययं क्लिष्टमेतत् ॥

**गूढार्थमप्रसिद्धार्थप्रयोगं ब्रुवते बुधाः॥11॥**

यथा,—*सहस्रगोरिवानीकं भवतो दुःसहं परैः।*
*हरेरिव तवाभान्ति नान्यतेजांसि तेजसि ॥*

अत्र सहस्रगुशब्देन सहस्राक्ष उक्तः। न च गोशब्दस्याक्षिण भूयसी प्रसिद्धिः। हरिशब्देन च सहस्रांशुः। सोऽपि न तेन नाम्ना बहुभिरुच्यते इति गूढत्वम् ॥

**स्वसङ्केतप्रक्लृप्तार्थं नेयार्थमिति कथ्यते।**

यथा,— *मुखांशवन्तमास्थाय विमुक्तपशुपङ्क्तिना।*
*पङ्क्तित्यनेकजनामध्रतुका जित उलूकजित् ॥*

अत्र पङ्क्तिशब्देन दशसंख्या अनेकजनामेत्यनेन चक्रं तद्ध इत्यनेन रथः ताभ्यां दशरथः। तस्य तुक् बालको लक्ष्मणः तेन जितः उलूकजित् इन्द्रजित्। किं कृत्वा, मुखांशवन्तमास्थाय हनूमन्तम्। किम्भूतेन, विमुक्तपशुपङ्क्तिना विमुक्तेषुपङ्क्तिना। अत्र पशुशब्देन गोशब्दो लक्ष्यते, तेन इषवः। तदिदं स्वसङ्केतकल्पितार्थं नेयार्थमुच्यते ॥

**न यत् पदं निश्चयकृत् सन्दिग्धमिति तद्विदुः॥12॥**

यथा,—*नीलो लोहितमूर्त्तिर्यो दहत्यन्ते जगत्त्रयम्।*
*स एष हि महादेवस्त्रिषु लोकेषु पूज्यते ॥*

अत्र **वह्निरर्कः शिवो वेति न निश्चीयते ।**
**विरुद्धं विपरीतार्थप्रकल्पनमिहोच्यते ॥**

यथा,—*अनुत्तमानुभावस्य परैरपि हितौजसः।*
*अकार्य्यसुहृदोऽस्माकमपूर्व्वास्तव कीर्त्तयः ॥*

अत्रानुत्तम इत्यनेन यथोत्कृष्टस्तथापकृष्टोऽपि। अपिहितमित्यनेन यथानाच्छादितं तथाच्छादितमपि। अकार्य्यसुहृदित्यनेन यथा कार्य्यमन्तरेण यः सुहृदेवमकार्य्ये यः सुहृत्सोप्युच्यते। अपूर्व्वाः कीर्त्तय इत्यनेन यथाद्भुताः कीर्त्तय एवमकीर्त्तयोऽप्युच्यन्ते ॥

**अप्रयोजकमित्याहुरविशेषविधायकम् ॥13॥**

यथा,—*तमालश्यामलक्षारमत्यच्छमतिफेनिलम्।*
*फालेन लङ्घयामास हनूमानेष सागरम् ॥*

अत्र तमालश्याममित्यादीनि सागरविशेषणानि लङ्घने न हनूमतोऽतिशयं सूचयन्ति॥

**तद्देश्यमिति निर्दिष्टं यदव्युत्पत्तिमत्पदम्।**

*यथा,—गल्लौ लावण्यतल्लौ ते ललहौ लडहौ भुजौ।*
*नेत्रे वोसट्टकन्दोट्टमोट्टायितसखे सखि ॥*

**अत्र गल्लतल्लादयः शब्दा अव्युत्पत्तिमन्तो देश्या दृश्यन्ते।**
**अश्लीलामङ्गलघृणावदर्थं ग्राम्यमुच्यते ॥14॥**

**अत्राश्लीलमसभ्यार्थमसभ्यार्थान्तरञ्च यत्।**
**असभ्यस्मृतिहेतुश्च त्रिविधं परिपठ्यते॥15॥**

तेष्वसभ्यार्थं यथा,

*छत्राकारशिराः शिरालसरलस्थूलप्रकाण्डो महान्*
*मध्ये भानुसुताभ्रसिन्धुविपुलाभोगो वटः पातु वः।*
*कार्य्यैक्ये विकटप्रसारितमहाजङ्घं महीसुप्तयो-*
*र्यः खण्डेन्दुकिरीटकैटमजितोः काटश्रियं कर्षति ॥*

तदेतच्छत्राकारशिराः काट इत्यादेरसभ्यार्थत्वादसभ्यार्थम् ॥

असभ्यार्थान्तरं यथा,

*विद्यामभ्यसतो रात्रावेति या भवतः प्रिया।*
*वनितागुह्यकेशानां कथं ते पेलवं धनम् ॥*

तदेतद् या भवतः प्रिया वनितागुह्यकेशानां पेलवंधनशब्दानामसभ्यार्थान्तरत्वादसभ्यार्थान्तरम्॥ असभ्यस्मृतिहेतुर्यथा,

*उत्कम्पयसि मां चूत पिकवाक्काटवेन किम्।*
*कृतः कृकाटिकायान्ते पादः प्राणेन यास्यता ॥*

तदिदं काटवकृकाटिकापदयोरसभ्यस्मृतिहेतुत्वादसभ्यस्मृतिहेतुः।

**लोकेषु यदशस्तार्थमशस्तार्थान्तरञ्च यत्।**
**अशस्तस्मृतिहेतुश्चामङ्गलार्थं त्रिधैव तत् ॥16॥**

तेष्वशस्तार्थं यथा,

*खेटके भक्तसूपस्य वलभ्याः पत्तनस्य च।*
*अतृप्तोऽहं मरिष्यामि हेहले भाषितैस्य च ॥*

अत्र मरिष्यामीति पदमशस्तार्थम्।

अशस्तार्थान्तरं यथा,

*प्रवासयति या कान्तं वसन्ते गृहसंस्थितम्।*
*विना शपथदानेन पिशाची सा न चाङ्गना ॥*

अत्र प्रवासयति-संस्थितं-विनाशपथदानेन-पिशाचीपदानामशस्तार्थन्तरत्वम्।

अशस्तस्मृतिहेतुर्यथा,

*मारीचोऽयं मुनिर्यस्य कृत्याः कालान्तकालये।*
*पत्न्यां संक्रन्दनादीनां सुतानामाप्तयेऽभवन् ॥*

अत्र मारीच-कृत्या-कालान्तक-संक्रन्दनपदानामशस्तार्थस्मृतिहेतुत्वम्।

**पदमर्थं घृणावन्तं यदाहार्थान्तरञ्च यत्।**
**घृणावत् स्मृतिहेतुर्यत् तद्घृणावदिह त्रिधा ॥17॥**

तेषु घृणावदर्थं यथा,

*पर्द्दते हदते स्तन्यं वमत्येष स्तनन्धयः।*
*मुहुरुत्कौति निष्ठीवत्यात्तगर्भा पुनर्वधूः॥*

अत्र पर्द्दते-हदते-वमति-निष्ठीवति इति शब्दानां घृणावदर्थत्वम्।

घृणावदर्थान्तरं यथा,

*वाष्पक्लिन्नाविमौ गण्डौ विपूयापाण्डुरौ तव।*
*प्रियोऽग्रे विष्ठितः पुत्रि स्मितवर्चोभिरर्चति ॥*

अत्र क्लिन्न-गण्ड-विपूय-विष्ठित-वर्चः पदानां घृणावदर्थान्तरत्वम् ॥

घृणावत्स्मृतिहेतुर्यथा,

*प्रत्यार्द्रयन्तो रूढानि मदनेषुव्रणानि नः।*
*हृदयं क्लेदयन्त्येते पुरीषण्डमहाद्रमाः ॥*

अत्र रूढव्रणपुरीषण्डपदानां घृणावत्स्मृतिहेतुत्वम्।

**शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत्।**
**व्याकीर्णं वाक्यसङ्कीर्णमपदं वाक्यगर्भितम् ॥18॥**

**द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे।**
**भग्नच्छन्दोयती च द्वे अशरीरमरीतिमत् ॥19॥**

**वाक्यस्यैते महादोषाः षोडशैव प्रकीर्त्तिताः।**
**अथैषां लक्ष्म संक्षेपात् सनिदर्शनमुच्यते ॥20॥**

**उच्यते शब्दहीनं तद्वाक्यं यदपशब्दवत्।**

यथा,—*नीरन्ध्रं गमितवति क्षयं पृषत्कै-*
*र्भूतानामधिपतिना शिलाविताने।*
*गाण्डीवी कनकशिलानिभं भुजाभ्याम्*
*आजघ्ने विषमविलोचनस्य वक्षः॥*

अत्र गमितवतीति क्तवतोः कर्म्मणि, आजघ्र इति आत्मनेपदस्य आस्वाङ्गकर्म्मणि प्रयोगादपशब्दौ। तौ च शिलावितानत्र्यक्षवक्षः सम्बन्धाद्वाक्यदोषौ जायमानौ असाधुनाम्नः पददोषाद्भिद्येते।

**क्रमभ्रष्टं भवेदार्थः शाब्दो वा यत्र न क्रमः॥21॥**

यथा,– *तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम्।*
*कान्तिप्रतापौ भवतः सूर्य्याचन्द्रमसोः समौ॥*

अत्र मातङ्गमथ तुरङ्गमिति वक्तव्ये तुरङ्गमथ मातङ्गमित्यार्थः, कान्तिप्रतापौचोक्त्वा सूर्य्याचन्द्रमसोः समाविति शाब्दः क्रमभ्रंशो लक्ष्यते।

**विसंहितो विरूपो वा यस्य सन्धिर्विसन्धि तत्।**

यथा,– *मेघानिलेन अमुना एतस्मिन्नद्रिकानने।*
*मञ्जर्जुद्रमगर्भासौ तर्वाल्युर्वी विधूयते॥*

इत्यादौ तु विरूपसन्धानं विसन्धिः।

**पदं पदार्थश्चाभिन्नौ यत्र तत् पुनरुक्तिमत्॥22॥**

*यथा,– उत्कामुन्मनयन्त्येते बालां तदलकत्विषः।*
*अम्भोधरास्तडित्वन्तो गम्भीराः स्तनयित्नवः॥*

अत्र उत्काम् उन्मनयन्ति इत्यर्थपुनरुक्तम्। गम्भीराः स्तनयित्नव इति शब्दपुनरुक्तम्।

**व्याकीर्णं तन्मिथो यस्मिन् विभक्तीनामसङ्गतिः।**

यथा,– *दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके।*
*मुखं वल्गुरवं कुर्वन् तुण्डेनाङ्गानि घट्टयन्॥*

अत्र कर्कशकण्टके दण्डेऽङ्गानि घट्टयन् हंसः पद्मिन्या मुखं चुम्बतीति वक्तव्ये यथानिर्द्दिष्टरूपे विघटितविभक्तिकत्वाद् व्याकीर्णम्।

**वाक्यान्तरपदैर्मिश्रं सङ्कीर्णमिति तद्विदुः॥23॥**

यथा,– *काअं खाअइ खुहिओ कूरं फेल्लेइ णिभमरं रुट्ठो।*
*सूणअं गेह्णइ कण्ठे हक्केइअ णत्तिअं ठेरो॥*

अत्र काकं क्षिपति, कूरं खादति, कण्ठे नप्तारं गृह्णाति, श्वानं भीषयते, इत्यादौ वक्तव्ये यथोक्तपदविन्यासः सङ्कीर्य्यते।

**समानयनमर्थानां मुखाद्यानां सबीजिनाम् ।**
**नानाभावोत्तराणां यद्भवेन्निर्वहणं तु तत् ॥इति॥41॥**

**[ ना. शा. अ. 19. (N.S.); अ. 21, श्लो. 39-43 (C.S.S.)]**

शब्दवैचित्र्यं यथा-असंक्षिप्तग्रन्थत्वं, अविषमबन्धत्वं, अनतिविस्तीर्ण-परस्परसंबद्ध सर्गादित्वं,

आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वं वक्तव्यार्थप्रतिज्ञानतत्प्रयोजनो-पन्यासकविप्रशंसादुर्जनसुजनस्वरूपवदादिवाक्यत्वं दुष्करचित्रादिसर्गत्वं, स्वाभिप्रायस्वनामेष्टनाममङ्गलाङ्कितसमाप्ति- त्वमिति ।

---

*अम्भोजगर्भसुकुमारतनुस्तदासौ कण्ठग्रहे प्रथमरागघने विलीय ।*

*सद्यः पतन्मदनमार्गणरन्ध्रमार्गैर्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥604॥*

[र. अं. 4. श्लो. 2]

*योऽपि मे विश्वासस्थानं वसन्तकः सोऽपि देव्या संयतः । तत्कस्याग्रतो बाष्पमोक्षं करिष्ये'॥605॥* पुनरत्रैव–

'अप्पिअं तेण पारेमि आचक्खिदुम्' इति विदूषकोक्ते 'राजा–(समाश्वस्य)

*प्राणाः परित्यजत मां ननु सत्पथोऽयं*
*हे दक्षिणा भवत मद्वचनं कुरुध्वम् ।*
*शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा*
*याता सुदूरमधुना गजगामिनी सा ॥606॥* [र. अं. 4. श्लो. 3. ]

इति राज्ञः सागरिकाप्राप्तिर्नैराश्यरूपैव ।

*'भे, मा अण्णहा संभावेहि । सा खु देवीए उज्जेणिं पेसिदा । अदा मए अप्पिअं ति भणिदम्'*॥607॥ इति विदूषकोक्त्या सन्देहमानीता । तथा हि तद्विसृष्टां रत्नामालां हृदये विन्यस्य पुनराह–

*अहह !*

*कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।*

*तुल्यावस्था सखी चेयं तनुराश्वास्यते मम ॥608॥* [र. अं. 4. श्लो. 4]

इतीन्द्रजालप्रयोगं यावद्विघ्ने वासवदत्ताक्रोधो निमितम् । एवं लोभा-दावुदाहार्यम् ।

**समानयनमर्थानामिति** । मुखाद्यानां चतुर्णां सन्धीनां येऽर्थाः प्रारम्भयत्नप्रत्याशा [ प्राप्त्याशा] नियताप्तिलक्षणास्तेषां सह बीजिभिर्बीजविकारैः क्रमेणावस्थाचतुष्टये । भवद्भिरुत्पत्त्युद्घाटनोद्भेदगर्भनिर्भेदलक्षणैर्वर्तमानानां नानाविधैः सुखदुःखात्मकै-

अर्थवैचित्र्यं यथा—चतुर्वर्गफलोपायत्वं, चतुरोदात्तनायकत्वं, रसभावनिरन्तरत्वं, विधिनिषेव्युत्पादकत्वं, सुसूत्रंविधानकत्वं, नगराश्रमशैलसैन्यावासार्णवादिवर्णनं, ऋतुरात्रिंदिवार्कास्तमय चन्द्रोदयादिवर्णनं, नायकनायिकाकुमारवाहनादिवर्णनं, मन्त्रदूतप्रयाणसंग्रामाभ्युदयादिवर्णनं, वनविहारजलक्रीडामधुपानमानापगमरतोत्स्वादिवर्णनमिति। उभयवैचित्र्यं,

---

रतिहासशोकक्रोधादिभिर्भावैरुत्तराणां चमत्कारास्पदत्वेन जातोत्कर्षाणां यत्समानयनं यस्मिन्नर्थराशौ समानीयन्ते फलनिष्पत्तौ योज्यन्ते तन्निर्वहण फलयोगावस्थया व्याप्तम्। तत्र यदा सुखप्राप्तेः फलत्वं तदा रतिहासोत्साहविस्मयस्थायिबाहुल्यं धृतिहर्षगर्वौत्सुक्यमदादिव्यभिचारिभावबाहुल्यं च प्रारम्भादीनाम्। दुःखहानेस्तु फलत्वे क्रोधशोकभयजुगुप्सास्थायिभावबाहुल्यम्, आलस्यौग्र्यव्यभिचारिभावबाहुल्यं च दृष्टव्यम्। उदाहरणम्— **रत्नावल्या**मैन्द्रजालिकप्रवेशात्प्रभृत्यासमाप्तेरेषामवस्थासन्ध्यादीनां नायकप्रतिनायकतदमात्यतत्परिवारनायिकादिमुखेनापि नियोजनत्। न त्वेकमुखेनवेति।

**असंक्षिप्तग्रन्थत्वमिति**। अनेन ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशङ्किनां मनांस्यावर्जयति।

**अविषमबन्धत्वमिति**। अनेन शब्दसन्दर्भवेदिनां मनो मुदमादधाति।

**अनतिविस्तीर्णपरस्परसम्बद्धसर्गादित्वमिति**। अनेन ग्रन्थविस्तरभीरूणां चित्तमाकर्षति। सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारितां च दर्शयति।

**आशोर्नमस्कारवस्तुनिर्देशोपक्रमत्वमिति**। तत्र आशीर्यथा **हरविलासे**—

*ओमित्येतत्परं ब्रह्म श्रुतीनां मुखमक्षरम्।*
*प्रसीदतु सतां स्वान्तेष्वेकं त्रिपुरुषीमयम् ॥609॥* [**हरविलास.**]

नमस्कारो यथा **रघुवंशे**—

*'वागर्थाविव' ॥610॥* [*र. वं. स. 1. श्लो. 1*]

इत्यादि। वस्तुनिर्देशो यथा **हयग्रीववधे**—

*आसीद्दैत्यो हयग्रीवः ॥611॥* इत्यादि।

वक्तव्यार्थेत्यादि। वक्तव्यार्थप्रतिज्ञानं यथा **सेतुवन्धे**—
*तं तिअसबन्दिमोक्खं समत्तलोअत्स हिअअसल्लुद्धरणम्।*

*सुणह अणुरायइधं सीयादुक्खक्खयं दसमुहस्य वहम् ॥612॥*

**[से. ब. आश्वास 1. श्लो. 12]**

यथा—रसानुरूपसंदर्भत्वं, अर्थानुरूपछन्दस्त्वं, समस्तलोकरञ्जकत्वं सदलङ्कारवाक्यत्वं, देशकालपात्रचेष्टाकथान्तरानुषञ्जनं, मार्गद्वयानुवर्तनं चेति।

प्रयोजनोपन्यासो यथा तत्रैव—

*परिवड्ढइ विन्नाणं संभाविज्जइ जसो विढप्पन्ति गुणा।*
*सुवइ सुपरिसचरिअं कित्तं जेण न हरन्ति कहालावा॥613॥*

[*से. ब. आश्वास 1. श्लो. 10*]

कविप्रशंसा यथा **रावणविजये**—

*सयलं चेव निबन्धं दोहि पणहिं कलुसं पसण्णं च टिअं।*
*जाणन्ति कईण कई सुद्धसहावेहिं लोअणेहिं च हिअअम्॥614॥*

दुर्जनसुजनस्वरूपं यथा ***हरविलासे***—

*इतस्ततो भषन्भूरि न पतेत् पिशुनः शुनः।*
*अवदाततया किं च न भेदो हंसतः सतः ॥615॥* [*ह. वि.*]

**दुष्करचित्रादिसर्गत्वमिति**। आदिग्रहणेन यमकश्लेषादयो गृह्यन्ते। ते च **किरातार्जुनीयादौ** दृश्यन्त एव।

**स्वाभिप्रायेत्यादि**। तेष्वभिप्रायाङ्कता यथा—धैर्यं **मायुराजस्य,** उत्साहः **सर्वसेनस्य,** अनुरागः **प्रवरसेनस्येति**। स्वनामाङ्कता यथा—**राजशेखरस्य हरविलासे**। इष्टनामाङ्कता यथा—लक्ष्म्यङ्कता **किराते भारवेः,** श्र्यङ्कता **शिशुपालवधे माघस्य**। मङ्गलाङ्कता यथा—अभ्युदयः **कृष्णचरिते,** जय **उषाहरणे,** आनन्दः **पञ्चशिखशूद्रकथायाम्** इति।

**चतुर्वर्गफलोपायत्वमिति**। अनेन चत्वारो वर्गा धर्मार्थकाममोक्षाः त एव व्यस्ताः समस्ता वा फलं तस्योपायतया महाकाव्यं ज्ञापयन् मुक्तकादिभ्यो भेदमाचष्टे।

**चतुरोदात्तनायकत्वमिति**। अनेन कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आश्रयविभूत्योरप्युत्कर्षमभिदधाति।

**रसभावनिरन्तरत्वमिति**। अनेन रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं कार्यकारणभावमभिदधद्रसेभ्यो भावा भावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावसाध्यत्वेन भाजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति।

**विधिनिषेधव्युत्पादकत्वमिति**। अनेन गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति।

**सुसूत्रसंविधानकत्वकमिति**। अनेन प्रोक्तलक्षणाः पदार्थास्तथा निबन्धनीया यथा प्रबन्धस्य शोभायै भवन्तीति कवीन् शिक्षयति।

**नगराश्रमेत्यादिना** देशप्रशंसामुपदिशति। नगरवर्णनं यथा **हरिविजयरावणविजय-शिशुपालवध-कुमारसंभवादौ**। आश्रमवर्णनं यथा **रघुवंश-किरातार्जुनीयादौ**। शैलवर्णनं **किरातार्जुनीयादौ**। सैन्यावासवर्णनं **माघे**। अर्णववर्णनं **सेतुबन्धादौ**।

**ऋत्वित्यादिना** कालावस्थोपर्णनं लक्षयति। तत्र ऋतुवर्णने शरद्वसन्तग्रीष्मवर्षादिवर्णनानि **सेतुबन्ध-हरिविजय-रघुवंश हरिवंशादौ**। रात्रिवर्णनं **किरातार्जुनीय-कुमारसंभव-शिशुपालवध-हयग्रीववधादौ**। दिवसवर्णनं प्रभातपूर्वाह्णमध्याह्नापराह्णवर्णनानि **शिशुपालवधकिरातार्जुनीयादौ**। अर्कास्तसमयवर्णनं **कुमारसंभव-हरिविजय- रावणविजय-सेतुबन्धादौ** चन्द्रोदयवर्णनं **कुमारसंभव- किरातार्जनीय-शिशुपालवध-सेतुबन्धा**दाविति।

**नायकेत्यादिना** पात्रविशेषाभिनन्दनं सूचयति। तत्र नायकवर्णनं **हरिविजय-रावणविजय-जानकीहरण-रघुवंशादौ**। नायिकावर्णनं **कुवलयाश्वचरित-कुमारसंभव-जानकीहरण-सुभद्राहरणादौ**। कुमारवर्णनं **रघुवंशादौ**। वाहनवर्णनेत्यादिना हस्त्यश्वगरुत्मपुष्पकादिवर्णनानि **हरिविजय-रावणविजयादौ**।

**मन्त्रेत्यादिना** अर्थप्रधानचेष्टानामुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृन्महा-काव्यं भवतीत्यभिधत्ते। तत्र मन्त्रः पञ्चाङ्गः प्रतिपादितः। स यथा **किरातार्जुनीय-शिशुपालवध-भट्टिकाव्य-हयग्रीववधादौ**। दूतस्त्रिधा—निसृष्टार्थः परिमितार्थः शासनहरश्च। निसृष्टार्थो यथा—**उद्योगपर्वणि** वासुदेवः, **हरिविजये** वा सात्यकिः। परिमितार्थो यथा-**रामायणेऽङ्गदः**। शासनहरो यथा—**कादम्बर्या** केयूरक इति। **प्रयाणं** त्रिधा-स्वशक्त्युपचये परव्यसने, अभिमतार्थसिद्धये च। तत्र स्वशक्त्युपचये यथा—रघो **रघुवंशे**। परव्यसने यथा-जरासन्धव्यसनिनः शिशुपालस्योच्छेदाय वासुदेवस्य **शिशुपालवधे**। अभितमार्थस्वसिद्धये यथा—विष्णोः पारिजातहरणाय **हरिविजये,** यथा वा—-दिव्यास्त्रलाभायार्जुनस्य **किरातार्जुनीये** इति। **संग्रामस्त्रिधा**—समः, विषमः, समविषम इति। तत्र समः—द्वन्द्वयुद्धे चतुरङ्गयुद्धे च। द्वन्द्वयुद्धं यथा— रामरावणायोः। चतुरङ्गयुद्धं यथा कुरुपाण्डवानाम्। विषमो यथा — रामस्य खरदूषणत्रिशिरोभिः सह।

*चतुर्दशसहस्राणि चतुर्दश च राक्षसाः।*
*हतान्येकेन रामेण मानुषेण पदातिना ॥616॥* इति।

समविषमो यथा—महेश्वरार्जुनयोः **किरातार्जुनीये,** रघुमघोनोर्वा **रघुवंश** इति। **अभ्युदयस्त्रिधा**—अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिः। तत्रारिविजयो द्विधा—शत्रूच्छेदेन, तदुपनत्या च। स पूर्वो **रावणवधादौ** द्वितीयो **हरिविजयादौ**। स्त्रीलाभो यथा—इन्दुमती. स्वयंवरे पुत्रलाभो दिलीपस्य **रघुवंश** इति।

**वनविहारेत्यादिना** सोद्दीपनविभावस्य संभोगशृङ्गारस्योपदेशात्। मन्त्रदूतप्रयाणसंग्रमा-भ्युदयादिभिस्तानर्थानधिगम्य तैस्तैर्विलासविशेषैः कामसेवया तदुपयोगः कर्तव्य इति शिक्षयति। तत्र वनविहारो द्विधा-मृगयादिः, पुष्पावचायादिश्च। तत्राद्यो यथा—दशरथस्य

तत्र संस्कृतभाषानिबद्धसर्गबन्धं **हयग्रीववधादि**, प्राकृतभाषानिबद्धाश्वासकबन्धं **सेतुबन्धादि**, अपभ्रंशभाषानिबद्धसंधिबन्धं **अब्धिमथनादि**, ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं **भीमकाव्यादि**। प्रायोग्रहणात् संस्कृतभाषयाऽप्याश्वासकबन्धो **हरिप्रबोधादौ** न दुष्यति। प्रायोग्रहणादेव **रावणविजयहरिविजयसेतुबन्धेष्वादितः** समाप्ति पर्यन्तमेकमेव छन्दो भवतीति। पर्यन्तमेकमेव छन्दो भवतीति। गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते।

---

**रघुवंशे**। द्वितीयो यथा—यदूनां **शिशुपालवधे,** अप्सरसां वा **किरातर्जुनीय** इति। जलक्रीडा द्विधा—-एकस्य वा बह्वीभिः स्वयोषाभिर्बहूनां वा बह्वीभिर्यथास्वमूङ्गनाभिः। तत्राद्या यथा—कार्तवीर्यस्य नर्मदायाम्, कुशस्य वा सरय्वाम्। द्वितीया यथा—अप्सरसां सिद्धसिन्धौ, यदूनां वा रैवतकह्रद इति। मधुपानं द्विधा—गोष्ठीगृहे, वासभवने च। तत्राद्यं **हरिविजये शिशुपालवधे** च। द्वितीयं **किरातार्जुनीये कुमारसंभवे** च। मानापगमो द्विधा—प्रायत्निकः, नैमित्तिकश्च। प्रायत्निको **हरिविजये** सत्याभामायाः । नैमित्तिको रामाल्लङ्कानिशाचरीणं **सेतुबन्धे**। **रतोत्सवोऽपि**। द्विधा—सामान्यतः विशेषतश्च। सामान्यतः **किरातार्जुनीये शिशुपालवधे** च। विशेषतः **कुमारसंभवे जानकीहरणे** च।

**रसानुरूपसन्दर्भित्वमिति**। अनेन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, क्रोधप्रकर्षे कठोरः, शोकप्रकर्षे मृदुः विस्मयप्रकर्षे तु स्फुटः शब्दसन्दर्भो विरचनीय इत्युपदिशन्—

*नैकमोजः प्रसादो वा रसभावविदः कवेः* – इति ख्यापयति ।

**अर्थानुरूपच्छन्दस्त्वमिति**। अनेन शृङ्गारे द्रुतविलम्बितादयः, वीरे वसन्ततिलाकादयः, करुणे वैतालीयादयः रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीया इत्युपदिशति।

**समस्तलोकरञ्जकत्वमिति**। अनेनालौकिकतां परिहरन् प्रतिनिबन्धनस्य प्रबन्धस्य लोके प्रतिष्ठया प्रयासवैयर्थ्यमपाकरोति।

**सदलङ्कारवाक्यत्वमिति**। अनेन यद्यप्युपात्तलक्षणानां गुणानामलङ्काराणां च स्वरूपसांकर्येणैव काव्यशोभाकरत्वं तथाप्यलङ्कारवन्नैवैनं भारं भूयसा उद्वोढुमलमित्येतदुपर्युपदेशेनोपपादयति।

**देशेत्यादिना** परिपूर्णाङ्गेऽपि संविधानके देशकालायविरोधेन तद्वर्णनादिकं निर्दिशति। तत्र देशान्तरानुषञ्जनं यथा—

*मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः।*
*भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥617॥*

[ *शि. व. स. 4. श्लो. 30*]

**नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ॥7॥**

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात्स्वयं स्वगुणोपवर्णनं न संभवतीत्यर्थाद्यस्यां धीरोद्धतादिना नायकेन स्वकीयं वृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादिष्वाख्यायते, अनागतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यन्ते, यत्र चावान्तरप्रकरण समाप्तावुच्छावा

---

कालान्तरानुषञ्जनं *यथा—*

*सपदि हरिसखैर्वधूनिदेशाद्ध्वनितमनोरमवल्लकीमृदङ्गैः ।*
*युगपदनुगुणस्य संनिधानं वियति वने च यथायथं वितेने ॥618॥*

*[कि. अ. स. 10. श्लो. 18]*

पात्रान्तरानुषञ्जनं *यथा—*

*करिष्यसे यत्र सुदुष्कराणि प्रसत्तये गोत्रभिदस्तपांसि ।*
*शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥619॥*

*[ कि. अ. स. 3. श्लो. 29]*

चेष्टान्तरानुषञ्जनं *यथा—*

*मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।*
*सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥620॥*

*[ कि. अ. स. 16. श्लो. 2.]*

कथान्तरानुषञ्जनं यथा—

*कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।*
*शृणु येन गतः कर्मणा शलभत्वं हरलोचनार्चिषाम् ॥621॥*

*[कु. सं. 4. श्लो. 40 ]*

मार्गद्वयानुवर्तनमिति । अनेन महाकवीनां समयमुपलक्षयति । तत्र ।

*गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।*
*निराकरणमित्येष मार्गः प्रकृतिसुन्दरः॥*

*वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।*
*तज्जायान्नायकोत्कर्षकथनं च धिनोति नः॥* इति ।

*[ का. द. परि. 1. श्लो. 21-22]*

बध्यन्ते सा संस्कृतभाषानिबद्धा, अपादः पदसंतानो गद्यं तेन युक्ता। युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका। यथा **हर्षचरितादिः**।

**धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ॥8॥**

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः, तस्य तु वृत्तमन्येन कविना वा यत्र वर्ण्यते, या च काचिद् गद्यमयी यथा **कादम्बरी**, काचित्पद्यमयी यथा **लीलावती**, या च सर्वभाषा काचित् संस्कृतेन काचित् प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित् पिशाच्या काचिदपभ्रंशेन बध्यते सा कथा।

---

अथ किमेतानि नगरार्णववर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि। समुच्चयप्रयोज्यानीति चेत्, **किरातार्जुनीयादौ** नगरार्णवार्कोदयविवाहकुमाराभ्युदयादीनामभणनम्। अथ विकल्पेन यथेष्टकल्पनायामलक्षणत्वप्रसङ्गः, तन्न, अङ्गकल्पनस्योभयथापीष्टत्वात्, यदा कथाशरीरस्य परिपूर्णाङ्गसंभवस्तदा समुच्चयेन। यदा त्वन्यथा तदा विकल्पेनेति। तत्रापि केषाञ्चिदेवाङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः। यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते। यथा— *'मन्त्रदूतप्रयाणादिनायकाभ्युदयादयः'* [ **का. द. परि. 1. श्लो. 17**] यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः। तानि च यदि कथाशरीरे न स्युस्तदा कथान्तरानुषञ्जनेनापि कर्तव्यानीति प्रचक्षते।

**वृत्तमिति**। वृत्तशब्दः सदाचार एव वर्तते। अत एव **मनुराह**—

*न विद्यया केवलया तपसा वापि पात्रता।*
*यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्॥*

[ *या. स्मृ. अ. 1. श्लो. 200*]

इति तदाह **सदाचाररूपमिति**। **वक्त्रेति**। **वक्त्रशब्देन** वक्त्रप्रकरणं लक्ष्यते। तद्यथा— 'अनुष्टुभि नाद्यात्स्नौ तुर्याद्यो वक्त्रम्' [**छ. शा. अ. 3. सू. 33**] इत्यादि। नारल्गा नजज्रा अपरवक्रम्' [ छ. शा. अ. 3. सू. 15] चृगौ षष्ठो जो न्लौ वा पूर्वेऽर्धे परे षष्ठो लआर्या गाथा' [ छ. शा. अ. 4. सू. 1] इत्येव **छन्दोनुशासने** लक्षितानि। वक्त्रं यथा **हर्षचरिते**—

*निजवर्णहितस्नेहा बहुभक्तजनान्विताः।*
*सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥622॥*

[ ह. च. उ. 3. पृ. 83]

प्रबन्धमध्ये परबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदेको ग्रन्थिकः कथयति **तद्गोविन्दवदाख्यानम्**।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमाकर्यं वा निश्चीयते तत्**पञ्चतन्त्रा**दिवत्, धूर्तविट**कुट्टनीमत**मयूरमार्जारिकादिवच्च निदर्शनम्। प्रधानमधिकृत्य यत्र द्वयोर्विवादः सार्धप्राकृतरचिता **चेटका**दिवत् प्रवह्लिका।

---

**अपरवक्त्रं** यथा–

*तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते।*
*अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम्॥623॥*

[ह. च. उ. 1. पृ. 18]

**आर्या** यथा–

*सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे।*
*विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥624॥*

[ह. च. उ. 4 पृ. 119]

**उपाख्यान**मिति। यदाह–

*नलसावित्रीषोडशराजोपख्यानवत्प्रबन्धान्तः।*
*अन्यप्रबोधनार्थं यदुपाख्यातं ह्युपाख्यानम् ॥*

**आख्यान**मिति। तथा चाह–

*आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन्।*
*ग्रन्थिक एकः कथयति **गोविन्दवदवहिते** सदसि ॥*

**निदर्शनमिति**। तथा च–

*निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः।*
*कार्यमकार्यं वा तन्निदर्शनं **पञ्चातन्त्रा**दिः॥*

*धूर्तविट**कुट्टनीमत**मयूरमार्जारिकादि यल्लोके।*
*कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि॥*

**प्रवह्लिकेति**। तथा च–

*यत्र द्वयोर्विवादः प्रधानमधिकृत्य जायते सदसि।*
*सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृतिः॥*

**मन्थल्लिकेति**। तथा च–

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा **गोरोचना–अनङ्गवत्या**दिवन्मन्थल्लिका। यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मन्थल्लिका।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा **मत्स्यहसिता**–दिवन्मणिकुल्या।

**एकं** धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णन प्रधाना-**शूद्रका**दिवत् परिकथा।

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सा **इन्दुमत्या**दिवत् खण्डकथा। समस्तफलान्तेतिवृत्तवर्णना **समरादित्या**दिवत् सकलकथा। एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा। लम्भाङ्किताद्भुतार्था **नरवाहनदत्तादिचरित**वद् बृहत्कथा। एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः।

**गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः॥9॥**

संस्कृताभ्यां गद्यपद्याभ्यां रचिता, अभिप्रायेण यान्यङ्कानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्ध चम्पूः। यथा **वासवदत्ता दमयन्ती** वा।

**अनिबद्धं मुक्तकादि॥10॥**

मुक्तकसंदानितकविशेषककलापककुलकपर्याकोशप्रभृत्यनिबद्धम्।

---

*क्षुद्रकथा मन्थल्ली प्रेतमहाराष्ट्रभाषया भवति।*
*गोरोचनेव कार्या सानङ्गवतीव वा कविभिः॥*

**सापीति**। तथा च–

*यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम्।*
*प्रारब्धानिर्वाहे सापि हि मन्थल्लिका भवति॥*

**मणिकुल्येति**। तथा च–

*मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु।*
*पश्चात्प्रकाशते सा मणिकुल्या* ***मत्स्यहसितादिः***॥

**परिकथेति**। तथा च–

*पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः।*
*श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु॥*

एषां लक्षणमाह—

**एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि॥11॥**

एकेन छन्दसा वाक्यार्थसमाप्तौ मुक्तकं यथा—**अमरुकस्य** शृङ्गारशतके रसस्यन्दिनो मुक्तकाः। द्वाभ्यां सन्दानितकम्। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। एतानि च विशेषानभिधानात् सर्वभाषाभिर्भवन्ति।

**पञ्चादिभिश्चतुर्दशान्तैः कुलकम्॥12॥**

छन्दोभिरिति वर्तते। मुक्तकानामेकप्रघट्टकोपनिबन्धः पर्या। अवान्तर-वाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः पर्या। सा कोशेषु प्रचुरं दृश्यते।

**स्वपरकृतसूक्तिसमुच्चयः कोशः॥13॥**

यथा **सप्तशतकादिः**। एकप्रघट्टके एककविकृतः सूक्तिसमुदायो **वृन्दा-वनमेघदूतादिः** संघातः। विप्रकीर्णवृत्तान्तानामेकत्र सन्धानं **यदुवंशदिली-पवंशादिवत्** संहिता। एवमनन्तोऽनिबद्धगणः। स आदिग्रहणेन गृह्यते।

इह च सत्सन्धित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिका-कथाचम्पूष्वपि दृष्टव्यः॥

**इति—आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञकाव्यानु-शासनवृत्तौ अष्टमोध्यायः समाप्तः॥**

---

**खण्डकथेति**। तथा च—

*ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः।*
*मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती॥*

**सकलकथेति**। चरितमित्यर्थः। **उपकथेति**। तथा च—

*यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः।*
*चरितं विचित्रमन्यत्सोपकथा चित्रलेखादिः॥*

**बृहत्कथेति**। तथा च—

*लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया।*
*नरवाहनदत्तादेश्चरितामिव बृहत्कथा भवति॥*

॥इति आचार्यश्रीहेमचन्द्रविरचिते विवेकेऽष्टमोऽध्यायः॥

## 39. नाटकलक्षणम्

### सागरनन्दी – नाटकलक्षणरत्नकोशः (I)

अगणितगुणौघसिन्धुर्नाटकविद्या प्रकाशिता येन।
तमजमनादिमनन्तं गौरीकान्तं नमस्यामः॥
कवीनां गुणवत्काव्यं कल्पर्यन्तवर्तिनीम्।
कीर्तिं स्वर्गफलप्राप्तिहेतुभूतां प्रसूयते ॥

तद्गुणनिर्णयशास्त्रं प्रमाणमतो नाटकलक्षणं दशरूपकमृषिप्रणीतमन्यमुनिवाक्यैः संवलितं सोदाहरणं च वक्ष्यामः॥

तत्काव्यं द्विधा विदधति सुधियः श्रव्यमभिनेयं च। श्रव्यं मुक्तककुलककोशसर्गबन्धादिबद्धम्। अभिनेयं नाटकम्। प्रकरणम्। प्रहसनम्। अङ्कः। व्यायोगः। भाणः। समवकारः। वीथी। डिमः। ईहामृगश्चेति। दशैतानि रूपकाणि। अन्यान्यपि नाटकालंकारार्थं वक्ष्यन्ते। तत्र रूपकेषूत्कृष्टत्वाद्बहुगुणकीर्णत्वाच्च सर्ववृत्तिनिष्पन्नस्य नाटकस्यैव स्वरूपनिरूपणमभिधीयते॥ यथाह भगवान्पितामहः।

धर्मादिसाधनं नाट्यं सर्वदुःखापनोदकृत्।
अनुसेवध्वमृषयस्तस्योत्थानं तु नाटकम् ॥

ऋग्भ्यः पाठ्यमभूद्गीतं सामभ्यः समपद्यत।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणाः स्मृता इति ॥

भरताचार्योऽप्येवंविधं नाट्यविषयं नाटकं प्रस्तौति।

न तच्छास्त्रं न तच्छिल्पं न सा विद्या न सा कला।
न तत्कर्म न योगो वा नाटके यन्न विद्यते ॥

महारसं महाभोग्यमुदात्तवचनान्वितम्।
महापुरुषसंचारं सालंकारं तु नाटकम् ॥

अन्येऽप्याचक्षते।

अपि शक्येत विद्वद्भिर्मुक्तिरभ्यासकौशलात्।
न तु नाटकविद्येयं सर्वलोकानुरञ्जनी ॥

तत्किमिदं नाटकं नाम। उच्यते। देवादीनां पूर्ववृत्तानुचरितम्। तदाह भरताचार्यः।

**देवतानां मनुष्याणां राज्ञां लोकमहात्मनाम्।**
**पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत् ॥**

तत्किमात्मकम्॥

**प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकम्।**
**राजर्षिवंशचरितं तथा दिव्याश्रयोत्थितम् ॥**

**नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैर्युक्तम्।**
**अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥**

तथा पुनरप्याह।

**नृपतीनां यच्चरितं नानारसभावचेष्टितैर्बहुधा।**
**सुखदुःखोत्पत्तिकृतं विज्ञेयं नाटकं नामेति ॥**

तत्र प्रख्यातवस्तुविषयमिति। राजर्षिवंशजातानां राज्ञां प्रसिद्धमाख्यानं वस्तु। यत्खलु लोकानामनुरञ्जनं कर्म। यथा रामस्य पितुराज्ञानुष्ठानादिदुष्करक्रियाध्यवसायः। प्रियापहारमन्युप्रतिकरणोचितरावणवधविक्रमानुष्ठानधर्मः। तथा जीमूतवाहनादीनां शरीरदानादिदुष्करक्रियाचरणम्। एवंभूतमाख्यानं वस्तुविषयो यस्य। रजर्षिवंशचरितमिति। सोमसूर्यवंशजातानां चरितम्। दिव्याश्रयोत्थितमिति। दिव्यानां महेश्वरजीमूतवाहनादीनां चरितम्। सुखदुःखोत्पत्तिकृतं तदेतद्रामयुधिष्ठिरवृत्तान्तेष्वभिव्यक्तमेव ॥ तस्यैवंविधस्य नाटकस्येतिवृत्तं भवति उपात्तं प्रतिसंस्कृतं च। उपात्तं पुराणसिद्धम्। रामादिवृत्तान्तः प्रतिसंस्कृतम्। उपात्तं केवलं कविना किंचिदुत्पाद्यवस्त्विति मुनिवचनात्प्रपञ्चितम्। यथा नागानन्दे गौरीगृहाद्यङ्कत्रयम्। वर्तमानमपि नृपतेर्महाभूतस्य कविबुद्धिप्रकर्षादासादितबीजबिन्द्वादिकं यदि भवति भवत्येव नाटकविषयम्।

तस्येतिवृत्तस्य पञ्चावस्था भवन्ति।

**संसाध्ये फलयोगे तु व्यापारः कारकस्य यः।**
**तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः॥**

**यथारम्भः प्रयत्नश्च प्राप्तिसंभव एव च।**
**नियता च फलप्राप्तिः फलयोगश्च पञ्चमः॥ इति॥**

तत्र बीजस्यौत्सुक्यमात्रबन्ध आरम्भः। यथा कोशलाङ्के।

*गुरोराज्ञा यत्र प्रभवति नितान्तं न निकृतिर्*
*मुदे ज्ञातिप्रीतिर्भवति न पुनः कार्यपरता।*
*न नन्दन्त्युद्वृत्ताः प्रियमुपगता यत्र सुहृदो*
*गुणा ह्रीष्टा यत्र प्रकृतिचपला नार्थविषयाः॥*

एतद्विधातुमयमारम्भः॥

प्रयत्न इति। फलयोगमपश्यत एव तत्र व्यापारः प्रयत्नः। यथा कुलपत्यङ्के।

*जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनमिति॥*

प्राप्तिसंभव इति। भावमात्रेण फलस्य या प्राप्तिः सा प्राप्तिसंभवः। यथा सुग्रीवाङ्के।

*त्वङ्गत्पिङ्गप्रभाभिः प्लुतकनकगिरिभ्रान्तिमुत्पादयन्तो*
*वक्त्रैर्लाक्षारसाभैः सपदि विदधतानेकसूर्यामिव द्याम्।*
*वेल्लल्लाङ्गूलहेलाचलितकृतगिरिव्यस्तबन्धां धरित्रीं*
*कुर्वाणाः संपतन्तु क्षय इव मरुतो वानरा राक्षसेषु॥*

अत्र सीतोपलब्धिमात्रेण राक्षसानां वधाध्यवसायः। नियता निश्चिता फलप्राप्तिरुपस्थितैवेति यावत्। यथा वेणीसंहारे।

*पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते*
*पाञ्चाली सुचिरोज्झितेऽपि कबरीबन्धे करोतु क्षणम्।*
*रामे शातकुठारभासुरकरे शत्रुद्रुमच्छेदिनि*
*क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः॥*

अथ वा।

अरातेरपचयपरंपरा नियता च फलप्राप्तिरित्यश्मकुट्टः। यथा जानकीराघवे षष्ठेऽङ्के लक्ष्मणः।

*दूरप्रोन्नतकुम्भकर्णवितपीच्छिन्नस्त्वया शक्रजित्*
*स्थाणुः क्ष्माङ्गमितो निकुञ्जगहनः कुम्भः स चोन्मूलितः।*
*पौलस्त्यैकजरद्रुमस्थितमनीकानामदुर्गेऽस्ति ते*
*ध्वस्तेयं व्यसनाटवी किमधुनाप्यार्यो यदुत्ताम्यति॥*

अभिप्रेतमनुरूपं क्रियाफलं यत्र निष्पन्नं स फलयोगः। यथा जानकीराघवे प्रथमाङ्के।

*सीता सभयम्। अइ रामभद्द। परित्तायाहि हरदि मं रक्खसाधमो।*

*प्रियंवदा। हला म भाआहि। जद् असौ तुमं हरिस्सदि तदा वाणरचअपरिवुदो समुद्दकन्तारं विलङ्घिअ रामभद्दो एदं रक्खसाधमं वावाददूस्सदि तुमं च पच्चाहरदूस्सदि त्ति तक्केमि॥*

इति मुख्यसंधौ उदीर्णं यद्रावणव्यापादनं सीताप्रत्याहरणं तन्निर्वहणसंधौ

*लङ्काधीशप्रभृतिरिपवो घातितास्ते च साध्वी*
*लब्धा सीतेत्व-*

आदिना द्वयमपि साधितम्। इति पूर्वोक्तस्याविरोधेन रावणस्य यो वधः सीतायाश्च प्रत्याहरणं स फलयोगः प्रतिपत्तव्य इति।

*एताश्चपञ्चावस्थाः संक्षेपतो मातृगुप्तेन कथ्यन्ते।*

**प्रारम्भो रावणवधे खरप्रभृतिवैशसम्।**
**प्रयत्नः शूर्पणखया कृतः सीतापहारतः ॥**

**सुग्रीवस्य तु सख्येन संजातः प्राप्तिसंभवः।**
**नियता फलसंप्राप्तिः कुम्भकर्णादिसंक्षये ॥**

**यो देवै राक्षसपतेः कार्यो दुष्टमतेर्वधः।**
**फलयोगः स रामस्य धर्मकामार्थसिद्धये ॥**

एतत्तु राघवाभ्युदये सुव्यक्तमेव।

तन्नाटकं मिश्रं कर्तव्यम्। उत्तमाधममध्यमपात्राणां भाषाभिर्मिश्रं कर्तव्यम्।

भाषाश्च

**मागध्यवन्तिका प्राच्या शौरसेन्यर्धमागधी।**
**वाह्लीकी दाक्षिणात्या च सप्तैताः परिकीर्तिताः॥**

तद्विभागोऽन्यत्र दर्शयितव्यः इह तु ग्रन्थविस्तरभयान्न दर्शितः। मृदुशब्दाभिधानं च कर्तव्यमिति। मृदुः सुकुमारः शब्दोऽत्र विधातव्यः अभिधानमपि प्रसिद्धं सुबोधत्वान्मृदु कर्तव्यं। न तु मा स्पृशेति वक्तव्ये लक्षणाधीनतया मा स्म स्प्राक्षीरिति न वक्तव्यम्। चन्द्रमुखीति वक्तव्ये धवलसुमुखीति न वक्तव्यमित्यर्थः।

नाटकादीन्येतानि भारतं वर्षमधिकृत्य कर्तव्यानि। यत्रैव सुखदुःखयोः संभवः। अन्यत्र सुखमेव न दुःखम्। अन्यवर्षेष्वपि ये पर्वताः सन्ति तेष्वपि संभोग एव न दुःखमस्ति। अत एवाचार्यः।

**तद्भारतेऽत्र वर्षे कर्तव्यं काव्यबन्धेषु।**
**तस्माद्भारतमिष्टं वर्षेष्वेतेषु विदितेषु ॥**

**उपवनगमनक्रीडाविहारनारीरतिप्रमादाः स्युः।**
**तेषु [हि] वर्षेषु सदा न तत्र दुःखं न वा शोकः ॥**

**ये तेषामपि वासाः पुराणवादेषु पर्वताः कथिताः।**
**[सं]भोगस्तेषु भवेत्कर्मारम्भस्तथा ह्यस्मिन्निति ॥**

शेषः सुबोध एव।

अस्य च नाटकस्य पञ्चार्थप्रकृतयो भवन्ति। नाटकीयवस्तुनः पूर्वोक्तस्य पञ्च प्रकृतयः स्वभावा भवन्ति। नैतान्परित्यज्य नाटकार्थाः संभवन्ति तद्यथाचार्यः।

**अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि।**
**बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ॥**

बीजं नाटकार्थस्य फलभूतस्य कारणम्। तद्यथा

**किंचिन्मात्रं समुद्दिष्टं बहुधा यद्विसर्पति।**
**यावत्फलावसानं च तद्बीजमिति कीर्तितम् ॥**

किंचित्स्तोकं श्लेषच्छायोपक्षेपप्रभृतिभिरङ्गैः समुद्दिष्टं कथितम्। बहुधा विसर्पति फलावसानं यावत्तद्बीजमित्यर्थः।

अन्यस्त्वाह।

**इष्टार्थसाधनं बीजमुप्तमुत्पातमुद्धतम्।**
**अन्विष्टं फलितं पञ्च संदिष्टान्दर्शयेत्क्रमात् ॥ इति ॥**

तत्र प्रश्लेषो द्व्यर्थवचनम्। छाया कथासाम्यम्। उपक्षेपः अर्थोपस्थानमेभिरङ्गैस्तद्बीजमुच्यते। यथा श्लेषः। वेण्यां–

*सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।*
*निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे॥*

छाया यथा जानकीराघवे।

*नीतां दुर्गमगाधवारिधितलं दैत्येन हत्वा च तं*
*यः पृथ्वीं भुजगेन्द्रभोगभवनं प्रत्यानयत्प्रेयसीम्।*
*क्रीडाक्रोडतनुः स कैटभरिपुः पुष्णातु युष्माञ्जगत्*
*स्वास्थ्यस्वस्त्ययनैकहेतुरमरैः सानन्दमभ्यर्चितः॥*

उपक्षेपः। कुन्दमालायम्।

क एष आर्याह्वानेन मे साहायकमिवाचरति। निरूप्य।

*लङ्केश्वरस्य भवने सुचिरं स्थितेति*
*रामेण लोकपरिवादभयाकुलेन।*
*निर्वासितां पतिगृहाद्विजने वनेऽस्मिन्*
*सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥*

बिन्दुः बिन्दुरिव विच्छिन्नायामपि धारायां यथा जलबिन्दुः पटलपर्यन्तेष्वन्तरान्तरालब्धनिजनिपातः पयसां पतनमभिव्यञ्जयति तथायमपि प्रयोजनमित्यर्थः। यथा–

**प्रयोजनानां विच्छेदे यदविच्छेदकारणम्।**
**यावत्समाप्तिं कार्यस्य स बिन्दुरिति कथ्यते ॥**

आनुषङ्गिककार्यान्तरेण प्रधानप्रयोजनस्य विच्छेदेऽपि संवृत्ते कथायास्त्वविच्छेदहेतुः स बिन्दुः परिकीर्तितः। यथा वेणयां भीमः।

*लाक्षागृहानलविषान्नसभाप्रवेशैः*
*प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।*
*आकृष्य पाण्डववधू परिधानकेशान्*
*स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः॥*

इत्यनेकधा दुर्योधननिकारपरंपरां दर्शयन्प्रयोजनस्य कुरुकुलक्षयस्यानुबन्धं दर्शयति ॥

अन्ये तु। यद्धि नाटकार्थस्य प्रकृतिभूतमवमानोत्साहाभ्यां प्रत्यङ्कं परिकीर्त्यते स बिन्दुः। यथा राघवाभ्युदये केकय्याः प्रत्यङ्कमुत्कीर्तनम्। वेण्यां च कीर्त्यते द्रौपदीकेशाकर्षणम्। उत्साहे च नागानन्दे जीमूतवाहनस्य सर्वाङ्के कीर्तनमिति ॥ स च कार्यस्य समाप्तिं यावत्प्रवर्तयितव्यः। यथा जानकीराघवे संहाराङ्के रामः।

*ताताज्ञायां स्थितमविकृतं केकयीप्रार्थितानां*
*लब्धस्तेषामवधिरटवीवाससंवत्सराणाम्।*
*लङ्काधीशप्रभृतिरिपवो घातितास्ते च सीता*
*साध्वी लब्धा किमधिकमतः प्रार्थये त्वां सुरेन्द्र ॥*

अथैप बिन्दोरपरः पक्षः। यथा रावणस्य वधे। मारीचखरादिसैन्य-कुम्भकर्णेन्द्रजितामनवरतवधदर्शनम्। कौरवाणां च द्रोणादिवधदर्शनमिति।

पताका ध्वजोपरिनिहितपताकेव पताका यथेयमेकदेशे स्थायिनी सकलं सैन्यं द्योतयति। तथा चेयमपि नाटकैकदेशवर्तिनी नाटकं सकलमेव प्रकाशयति ॥ तद्यथा—

**यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम्।**
**प्रधानवच्च कल्पेत पताका साभिधीयते ॥**

यस्या वृत्तं वर्तनं परार्थं परप्रयोजनार्थं प्रधानस्योपकारकं भवेत्। स्वयमपि पौरुषातिशयार्थं प्रधानवत्कल्पेत सा पताका। यथा वेण्यां कर्णस्य चरितं दुर्योधनमुपकर्तुं प्रवृत्तं स्वपौरुषार्थमपि। सा च गर्भेऽवमर्शे च निवर्तत इति

नात्यन्तिकमेतदवगन्तव्यम्। अन्ये पताकेत्युपनायकचरितमेव स्थूलार्थमुपवर्णयन्ति। तेनानन्तरव्याख्यापि सिध्यति। उपनायकेन नायकमुपकर्तुं प्राधान्यमवलम्ब्य यत्क्रियते सा पताका यथा मकरन्दस्य माधवमुपचिकीर्षोर्मालतीरूपत्वादिकमिति।

प्रकरी पुष्पप्रकरवन्निहिता या शोभां जनयति सा प्रकरी। तद्यथा।

**फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः।**
**अनुबन्धविहीनां तां प्रकरीमिति निर्दिशेत् ॥**

यस्याः फलं प्रयोजनं परार्थं परस्य हेतोः प्रकल्प्यते जायते। अनुबन्धो नैरन्तर्येण प्रवर्तनं तेन विहीनां त्यक्ताम्। उत्पन्नप्रनष्टामित्यर्थः। यथा कुलपत्यङ्के।

*जटायुः। आः क्षुद्रराक्षसापसद! क्व मे सुतवधूमपहृत्य गच्छसीत्यादि।*

रावणजटायुषोर्वृत्तान्तेष्वभिव्यक्तमेव।

कार्यम्।

**यदर्थे काव्य आरम्भः सिद्धे यस्मिन्समापनम्।**
**आनुषङ्गिकसंपन्नं तत्कार्यमिति कथ्यते ॥**

यदाह भरतः।

**यदाधिकारिकं कार्यं पूर्वमेव प्रकीर्तितम्।**
**तदर्थो यः समारम्भस्तत्कार्यमिति कीर्तितम् ॥**

पूर्वमेव परिकीर्तितमिति द्विविधं कार्यमाधिकारिकमानुषङ्गिकमिति। यथा।

**इतिवृत्तं हि नाट्यस्य शरीरं परिकीर्तितम्।**
**पञ्चभिः संधिभिर्यस्य विभागः परिकल्प्यते ॥**
**इतिवृत्तं द्विधा चैतद्बुधस्तु परिकल्पयेत्।**
**आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरमिति ॥**

इतिवृत्तमाख्यानं नाटकस्य शरीरं यद्बुधस्तद्द्विधा कारयेत्।

**एकमधिकृतं विन्द्याद्द्वितीयमानुषङ्गिकम् ।**
**यत्कार्यं हि फलप्राप्तेः समर्थं परिकल्प्यते ।**
**तदाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः॥**

फलप्राप्तिप्रधानभूतमाधिकारिकं तस्मादन्यत्प्रासङ्गिकम् ।

**रावणस्य वधे कार्ये यथाभूदानुषङ्गिकः ।**
**सुग्रीवमात्मसात्कर्तुं वधो रामेण वालिनः॥**

अन्यस्त्वाह । कथायामेव कथान्तरमुपकारकृदानुषङ्गिकमिति ।

**कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम् ।**
**तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥**

तदर्थो यः समारम्भ इत्याधिकारिकस्यैव निष्पत्तये यः समारम्भ उद्यमो विधीयते । प्रधानकार्योपक्षेप इत्यर्थः । यथा वेण्याम् ।

*प्रवेशकालः किल तत्र भवत इत्यादि।*

एषां बीजादीनां क्वापि कस्यचित्प्राधान्यमन्येषां गुणभावः ।

**एषां तु यस्य येनार्थो यतश्च गुण इष्यते ।**
**तत्प्रधानं तु कर्तव्यं गुणाभूतान्यतः परमिति ॥**



## 40. काव्यलक्षणपरिष्कारः

### जगन्नाथः – रसगङ्गाधरः (आदिभागः) (टीकाकारः भट्टनागेशः)

**मननतरितीर्णविद्यार्णवो जगन्नाथपण्डितनरेन्द्रः ।**
**रसगङ्गाधरनाम्नीं करोति कुतुकेन काव्यमीमांसाम् ॥**
**रसगङ्गाधरनामा संदर्भोऽयं चिरं जयतु ।**
**किं च कुलानि कवीनां निसर्गसम्यञ्चि रञ्जयतु ॥**

तत्र कीर्ति-परमाह्लाद-गुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य व्युत्पत्तेः कविसहृदययोरावश्यकतया गुणालंकारादिभिर्निरूपणीये तस्मिन्विशेष्यतावच्छेदकं तदितरभेदबुद्धौ साधनं च तल्लक्षणं तावन्निरूप्यते—

**रमणीयार्थप्रतिपादकः शब्दः काव्यम् ॥**

**रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता लोकोत्तरत्वं चाह्लाद-**

---

प्रतिजानीते—**मननेति**। मननरूपनौकापारंगतविद्यारूपोदधिर्जगन्नाथाख्यपण्डितश्रेष्ठः, पण्डितो नरेन्द्रः पृथ्वीशो येन वा। नरेन्द्रस्य पण्डित इति वा। पण्डितश्चासौ नरेन्द्रश्च तत्तुल्यत्वादिति वा। वस्तुतस्तु जगन्नाथपण्डितराज इति पृथ्वीपतिदत्तनामाभिलाषोऽयम्। कुतुकेनेत्यनेन स्वस्य ग्रन्थकरणे क्लेशाभावः सूचितः। मीमांसा विचारः॥

प्रार्थयते—**रसेति**। अयं बुद्धिस्थः संदर्भः पञ्चाङ्गकं वाक्यं चिरं चिरकालं जयतु सर्वोत्कर्षेण वर्तताम्। किं च स एव निसर्गसम्यञ्चि स्वभावरमणीयानि। एतेन कृत्रिमरमणीयनिरासः। कवीनां कुलानि वंशान्समूहान्वा रञ्जयत्वनुरक्तान्करोतु ॥

तत्र करणीये ग्रन्थे। परमाह्लादो विगलितवेद्यान्तरानन्दः। आदिना द्रव्यलाभादिः। कविः काव्यकर्ता। सहृदयस्तदनुभववान्। कवेरनुभवश्चेत्सहृदयत्वेनैव न तु कवित्वेन। गुणेति। विशेषणैरित्यर्थः आदिना रसादिपरिग्रहः। तस्मिन्काव्ये। निष्ठत्वं सप्तम्यर्थः। तस्य विशेष्यतायामन्वयः। तल्लक्षणं काव्यलक्षणम्। इष्टतावच्छेदकं च तदेव। तत्प्रकारकज्ञानस्य प्रवर्तकत्वादिति। बोध्यम्। तावदादौ। **रमणीयेति**। कटाक्षादिवारणाय शब्द इति। व्यङ्ग्याादिसंग्रहाय वाचक इत्यनुक्त्वा प्रतिपादक इत्युक्तम्। रमणीयशब्दप्रतिपादके व्याकरणादिरूपेऽतिव्याप्तिवारणायार्थेति। 'घटमानय' इत्यादिवाक्यवारणाय रमणीयेति। ननु रमणीयस्याननुगतत्वात्तत्रापि तत्त्वमस्त्येवेत्यत आह—**रमणीयता चेति**। ननु लोकोत्तरत्वं यथाकथंचिच्चेदुक्ता-दोषः, आत्यन्तिकं चेद्ब्रह्मानन्द एवात आह—**लोकोत्तरत्वं चेति**। अनुभवसाक्षिक इत्यनेन तदन्यप्रमाणनिरासः। चानुभवः सहृदयानामेव। एवं च नोक्तदोष इति भावः। ज्ञानं च भावनारूपमेव नान्यदित्याह—**कारणं चेति**। तदवच्छिन्ने चमत्कारत्वापर-पर्यायलोकोत्तरत्वरूपजात्यवच्छिन्ने विशेषो न तु सामान्यम्। अत एव तत्स्वरूपमाह—

गतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः। कारणं च तदवच्छिन्ने भावनाविशेषः पुनःपुनरनुसंधानात्मा। 'पुत्रस्ते जातः,' 'धनं ते दास्यामि' इति वाक्यार्थधीजन्यस्याह्लादस्य न लोकोत्तरत्वम्। अतो न तस्मिन्वाक्ये काव्यत्वप्रसक्तिः। इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण प्रतिपादकतासंसर्गेण

---

**पुनरिति**। लोकोत्तरेति विशेषणकृत्यमाह—**पुत्रस्ते इत्यादि**। अत्र वाक्यार्थद्वयम्। तथा सति परिष्कृतं लक्षणमाह—**इत्थं चेति**। उक्तार्थसिद्धौ चेत्यर्थः। फलितमित्यत्रान्वयः। यत्किंचिच्चमत्कारजनकज्ञाने समूहालम्बनविधया भासमानान्यार्थप्रतिपादकशब्दे काव्यत्ववारणाय ज्ञानेत्यपहाय भावनेत्युक्तम्। शब्दत्वमित्यस्य काव्यत्वमित्यत्रान्वयः। धारावाहिकसकलज्ञानविषयतादृशार्थप्रतिपादके वाक्येऽतिव्याप्तेराह—**यत्प्रतिपादितेति**। यादृशानुपूर्वीप्रतिपादितार्थविषयकत्वविशिष्टभावनात्वं तज्जनकतावच्छेदकं तादृशानुपूर्वीमत्त्वमित्यर्थः। तेन नोक्तदोषः। लाघवादाह—**स्वेति**। स्वं चमत्कारत्वम्। **जनकतावच्छेदकार्थेति**। अर्थे भावनानिष्ठजनकतावच्छेदकता विषयतासंबन्धेन बोध्या। लक्ष्यतावच्छेदकं चैतत्समानाधिकरणं काव्येत्याद्यनुगतव्यवहारेणास्वादजनकतया च सिद्धजातिविशेषरूपमुपाधिरूपं वा काव्यत्वं बोध्यम्। प्राञ्चः प्रकाशकृदादयः। नन्वास्वादव्यञ्जकत्वस्य उभयत्राविशेष एव मानमत आह—**काव्यमिति**। प्रत्युत वैपरीत्येन। आदिना काव्यं पठितमित्यादिसंग्रहः। **इत्यादीति**। इत्यादिसार्वजनीनव्यवाहारात्। सार्वविभक्तिकस्तुतिः। विशेषपदेन प्रागुक्तार्थकत्वसूचनम्। एवमग्रेऽपि। एवेनार्थनिरासः। प्रतिपत्तेश्च निर्णयाच्चेत्यन्वयार्थौ। **परेति**। प्रकाशकृदादीत्यर्थः। प्रत्यायकं निश्चायकम्। **विमतेति**। प्रकाशकृदित्यर्थः। उपसंहरति—**इत्थं चेति**। तस्याश्रद्धेयत्वे चेत्यर्थः। शब्दस्येत्यस्योभयत्र शक्तावन्वयः। एतेन व्यवहाररूपविनिगमकसत्त्वेन। प्रकरणार्थमुपसंहरति—**तदेवमिति**। एवमुक्तप्रकारेण। तस्यैव शब्दविशेषरूपस्यैव। प्रासाङ्गिकमाह—**एषैव चेति**। अन्यथा वेदत्वादेरुभयत्राङ्गीकारे। दुरवस्था व्यवहारोच्छेदापत्तिरूपा। **लक्षणीयत्वेति**। तथा च तत्रातिव्याप्तिरिति भावः। सर्वेषामपि चेष्टादीनामपि क्वचित्तदभावादाह—**प्रायश इति**। तथात्वेन रसव्यञ्जकत्वेन। तत्त्वापत्तिकाव्यत्वापत्तिः मतत्रयसाधारणं दोषमाह—**अपि चेति**। व्यासक्तं व्यासज्यवृत्ति। **उचितेति**। यदि त्वास्वादव्यञ्जकत्वस्योभयत्राप्यविशेषाच्चमत्कारिबोधजनकज्ञानविषयः तावच्छेदकधर्मवत्वरूपस्यानुपहसनीयकाव्यलक्षणस्स्य प्रकाशाद्युक्तलक्ष्यतावच्छेदकस्योभयवृत्तित्वाच्च काव्यं पठितम्, श्रुतं काव्यम्, बुद्धं काव्यमित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति। अत एव वेदत्वादेरुभयवृत्तित्वप्रतिपादकः 'तदधीते' इत्यादिसूत्रस्थो भगवा- न्पतञ्जलिः संगच्छते।

चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। यत्तु प्राञ्चः 'अदोषौ सुगुणौ सालंकारौ शब्दार्थौ काव्यम्' इत्याहुः, तत्र विचार्यते–शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्। काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहरतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च। व्यवहारः शब्दमात्रे लक्षणयोपपादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्। तदेव तु न पश्यामः। विमतवाक्यं त्वश्रद्धेयमेव। इत्थं चासति काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्ताद्व्यवहारतः शब्दविशेषे सिद्ध्यन्तीं शक्तिं को नाम निवारयितुमीष्टे। एतेन विनिगमनाभावादुभयत्र शक्तिरिति प्रत्युक्तम्। तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्, न तु स्वकल्पितस्य काव्यपदार्थस्य। एषैव च वेदपुराणादिलक्षणेष्वपि गतिः। अन्यथा तत्रापीयं दुरवस्था स्यात्। यत्त्वास्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकं तच्च शब्दे चार्थे

---

लक्षणयान्यतरस्मिन्नपि तत्त्वादेको न द्वाविति वत्र तदापत्तिः। तेनानुपहसनीयकाव्यलक्षणं प्रकाशोक्तं निर्बाधम्। एवमास्वादादौ वैलक्षण्यनिवेशादुक्तलक्षणद्वयमपि निर्बाधमिति नान्यमतमपि दुष्टमित्युच्यते तर्ह्यस्तु तथा। सामान्यलक्षणं त्वदोषादिपदाघटितमेव तेषामपि मते। एवं च न कोऽपि दोष इति बोध्यम्। तदाह–**लक्षण इति**। काव्यसामान्यलक्षण इत्यर्थः। आदिना संख्यादिपरिग्रहः। यथासंख्यमन्वयः। आदिना पतिप्राप्त्यादिपरिग्रहः। इदं च मध्यमणिन्यायेनोभयान्वयि। **अव्याप्त्यापत्तेरिति**। गुणालंकारयोरभावादिति भावः। तथा **अकाव्यमितीति**। ननु काव्यजीवितं चमत्कारित्वं तत्रास्तीत्यत आह–**काव्येति**। ननु विलक्षणचमत्कारित्वं तत्रैवेति नोक्तदोषोऽत आह–**गुणत्वेति**। ननु काव्यधर्मत्वं रसधर्मत्वं वा गुणत्वम्, काव्यशोभाधायकत्वं काव्यधर्मत्वं वालंकारत्वमित्यनुगम एवेति चेत्सत्यम्। तथापि गुणालंकारदीत्यादिपदेनादोषाविति विशेषणमयुक्तमित्यभिमतम्। युक्तं चैतत्। दोषसामान्याभावनिवेशे काव्यव्यहारस्य विरलविषयतापत्तेः। इदं काव्यं दुष्टमिति व्यवहारानापत्तेश्च। न चादोषपदेन स्फुटदोषराहित्यं विवक्षितम्। स्फुटत्वं च शाब्दबोधप्रतिबन्धकत्वम्। तेन निराकाङ्क्षत्वानासन्नत्वे गृह्येते। अन्यथा रसादिदोषाणां त्यागे बीजानापत्तिः। न ह्यदोषौ शब्दार्थावित्युक्ते रसादिदोषाभावः प्रतीयत इति वाच्यम्। अर्थशब्देन रसस्यापि ग्रहादिति भावः। तदाह–**दुष्टं काव्यमितीति**। एवं च तेषामपि मते तादृशकाव्यलक्षणेऽदोषाविति मात्रस्यानिवेश इति बोध्यम्। **स्वरसेति**। स्वारसिकस्येत्यर्थः। **विश्वेति**। सर्वजनीनेत्यर्थः। अपि प्रागुक्तरीतिसमुच्चायकः। ननु सामान्य-

चाविशिष्टमित्याहुः, तन्न। रागस्यापि रसव्यञ्जकतया ध्वनिकारदिसकलालंकारिकसंमतत्वेन प्रकृते लक्षणीयत्वापत्तेः। किं बहुना नाट्याङ्गानां सर्वेषामपि प्रायशस्तथात्वेन तत्त्वापत्तिर्दुर्वारैव। एतेन रसोद्बोधसमर्थस्यैवात्र लक्ष्यत्वमित्यपि परास्तम्। अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्, प्रत्येकपर्याप्तं वा ? नाद्यः। एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेः। न द्वितीयः। एकस्मिन्पद्ये काव्यद्वयव्यवहारापत्तेः। तस्माद्वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता।

लक्षणे गुणालंकारादिनिवेशोऽपि न युक्तः। 'उदितं मण्डलं विधोः' इति काव्ये, दूत्यभिसारिकाविरहिण्यादिसमुदीरितेऽभिसरणविधिनिषेध जीवनाभावादिपरे 'गतोऽस्तमर्कः' इत्यादौ चाव्याप्त्यापत्तेः। न चेदमकाव्यमिति शक्यं वदितुम्। काव्यतया पराभिमतस्यापि तथा वक्तुं शक्यत्वात्। काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव। गुणत्वालंकारत्वादेरननुगमाच्च। दुष्टं काव्यमिति व्यवहारस्य बाधकं विना लाक्षणिकत्वायोगाच्च। न च संयोगाभाववान्वृक्षः संयोगीतिवदंशभेदेन। दोषरहितं दुष्टमिति व्यवहारे बाधकं नास्तीति वाच्यम्। 'मूले महीरुहो विहंगमसंयोगी, न शाखायाम्' इति प्रतीतेरिवेदं पद्यं पूर्वार्धे काव्यमुत्तरार्धे तु न काव्यमिति स्वरसवाहिनो विश्वजनीनानुभवस्य विरहादव्याप्यवृत्तिताया अपि तस्यायोगात्। शौर्यादिवदात्मधर्माणां गुणानाम्, हारादिवदुपस्कारकाणामलंकाराणां च शरीरघटकत्वानुपपत्तेश्च। यत्तु 'रसवदेव काव्यम्' इति साहित्यदर्पणे निर्णीतम्, तन्न। वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापत्तेः। न चेष्टापत्तिः, महाकविसंप्रदायस्याकुलीभावप्रसङ्गात्। तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि कपिबालादि विलसितानि च। न च तत्रापि यथाकथंचि-

---

लक्षणस्यादोषपदाघटितत्वात्तथा व्यवहारोपपत्तिरत आह—**शौर्यादीति**। उत्कर्षाधायकत्वेन साम्यम्। एवं च विशेषलक्षणे तेषां निवेशेऽपि सामान्यलक्षणे तेषां न निवेश इति न कोऽपि दोष इति भावः। **वस्त्विति**। प्रधानपदस्योभयत्रान्वयः। **आकुलीति**। उच्छेदेत्यर्थः। संप्रदायमेवाह—**तथा चेति**। विलसितानि चेति वर्णितानीत्यस्यानुषङ्गः। न च तत्र रसोऽस्तीति भावः। यथाकथंचिदित्यस्यैव व्याख्या परम्परयेति। परम्परामेवाह—**अर्थेति**। सर्वस्यार्थस्येत्यर्थः॥




त्परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम्। ईदृशरसस्पर्शस्य 'गौश्चलति', मृगो धावति' इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात्। अर्थमात्रस्य विभावानुभावव्यभिचार्यन्यतमत्वादिति दिक्।

* * * * *

# Bibliography


1. (a) *Ṛgveda-Saṁhitā* with Sāyaṇa-bhāṣya: Ed. N.S. Sontakke and C.G. Kashikar; vol. IV. *Vaidika Samsodhanamandala*, Poona, 1946.; Ed. Max Müller, vol. I. London, 1890 and vol. IV, London, 1892.

   (b) *Atharvaveda* with Sāyaṇa-bhāṣya: Ed. S.P. Pandit, vol. II, Bombay, 1895.

   (c) *Taittirīya Upaniṣad*: Ed. V.G. Apte, Poona, 1929.

   (d) *Chāndogyopaniṣad:* Ed. V.G. Apte, Poona, 1934.
2. *Mahābhāṣya of Patanjali*: Paspasahnika; Ed. K.C. Chatterji; Mukherji and Co., Calcutta; 4th edn., 1972.
3. *Nirukta of Yāska* with Skandaswāmi's commentary: Ed. L. Sarup; University of Punjab, Lahore, 1931.
4. *Vākyapadīya of Bhartṛhari* with Vṛṣabhadevas commentary: Kanda I, Ed. K.A. Subramania Iyer, Deccan College, Poona, 1966.
5. *Nāṭyaśāstra of Bharata*, M.M. Ghosh; *Manisha Granthalaya*, Calcutta, 1967.
6. *Viṣnudharmottara-Purāṇa of Vyāsa*, Part III: *Venkateswara Steam Press,* Bombay, 1912 (folio edition)
7. *Kāvyālaṅkāra of Bhāmaha*: Ed. Batuknath Sharma and Baladeva Upadhyaya, *Chowkhamba Sanskrit series,* Banaras, 1928.
8. *Kāvyādarśa of Daṇḍin*; with commentary of Taruna Vācaspati and Hṛdayangama: Ed. M. Rangacharya, *Brahmavadin*, Madras, 1910.
9. *Kāvyālaṅkāra-sāra-saṅgraha of Udbhaṭa* with Tilaka's commentary: Ed. K.S. Ramaswami Sastri, *Oriental Institute*, Baroda, 1931.
10. *Kāvyālaṅkārasūtravṛtti of Vāmana*: *Nirnaya Sagar Press,* Bombay; 4th edn., 1895.

11. *Kāvyālaṅkāra of Rudraṭa* with Namisādhu's commentary: *Nirnaya Sagar Press*, Bombay, 1886 (*Kavyamala series*)
12. *Citramīmāṁsā of Appayyadīkṣita* : Ed. Sivadatta and K.P. Parab; *Nirnaya Sagar Press*, Bombay, 1893 (*Kavyamala series*)
13. *Alaṅkāra-sarvasva of Ruyyaka* with Jayaratha's commentary: *Nirnaya Sagar Press*, Bombay, 1939 (*Kavyamala series*).
14. *Dhvanyāloka of Ānandavardhana*: Ed. K. Krishnamoorthy; *Karnatak University*, Dharwar, 1974.
15. *Dhvanyāloka-Locana of Abhinavagupta: Nirnaya Sagar Press*, Bombay; 1911.
16. *Śṛṅgāra-prakāśa of Bhoja:* vol. I. Ed. G.R. Josyer, Mysore, 1955.
17. *Vakroktijīvita of Kuntaka:* Ed. K. Krishnamoorthy; *Karnatak University*, Dharwar, 1977.
18. *Vyaktiviveka of Mahimabhaṭṭa*: Ed. T. Ganapati Sastry; (*TSS*-50) Trivandrum, 1916.
19. *Aucitya-vicāra-carcā* by Kṣemendra: Ed. Durgaprasad and K.P. Parab; *Nirnaya Sagar Press*, Bombay 1886.
20. *Kavikaṇṭhābharaṇa of Kṣemendra: Nirnaya Sagar Press*, Bombay; 4th edn., 1937.
21. *Camatkāra-candrikā of Viśvesvara*: Ed. P. Saraswathi Mohan, *Meharchand Lachhmandas*, Delhi, 1972.
22. *Abhinavabhāratī of Abhinavagupta on Nāṭyaśāstra:* vol. I, Ed. M. Ramakrishna Kavi; 2edn., *Oriental Institute*, Baroda, 1956.
23. *Daśarūpaka of Dhanañjaya: Ed. K.P. Parab, Nirnaya Sagar Press*, Bombay, 1897.
24. *Kāvyaprakāśa of Mammṭa;* Chap. IV: Ed. R.R. Ambardekar and Mrs. Ambardekar, Bombay, 1972.
25. *Nāṭyadarpaṇa of Rāmacandra and Guṇacandra*: Ed. G.K. Shrigondekar and L.B. Gandhi; (*GOS*-48), 2nd edn., *Oriential Institute*, Baroda, 1959.

26. *Ekāvalī of Vidyādhara* with commentary 'Tarala' by Mallinatha; Ed. K.P. Trivedi, *Rajakiya Granthasala*, Bombay, 1903.
27. *Pratāparudrayaśobhūṣaṇa of Vidyānātha:* Ed. Chandrashekhara Sastri; *Balamanorama Press*, Madras, 1914.
28. *Bhāvaprakāśana of Śāradātanaya:* Ed. Yadugiri Yatirajaswami and K.S. Ramsawami Sastri, (*GOS*-45), *Oriental Institute*, Baroda, 1930.
29. *Sāhityadarpaṇa of Viśvanātha:* Ed. Durgaprasad Dwivedi, *Nirnaya Sagar Press*, Bombay, 1922.
30. *Rasārṇava-sudhākara of Singabhūpāla:* Ed. T. Ganapati Sastry; (*TSS*-50), Trivandrum, 1916.
31. *Rasagaṅgādhara of Jagannātha:* Ed. Durgaprasad Dwivedi, *Nirnaya Sagar Press*, Reprint; *Motilal Banarsidass*, Delhi, 1983.
32. *Alaṅkāra-kaustubha of Kavi-Karṇapūra:* Ed. S.P. Bhattacharya; *Varendra Research Society*, Rajshahi, 1926.
33. *Bhakti-rasāyana of Madhusūdana Sarasvati:* Ed. Janardan Sastri Pandeya; 2nd edn., Varanasi, 1975.
34. *Bhaktiraśamṛta-sindhu of Rūpa-Goswāmin: Vrajgaurav Prakashan*, Vrindavan, 1981.
35. *Kāvya-mīmāṁsā of Rājaśekhara:* Ed. C.D. Dalal and R.A. Sastri; (*GOS*-1), 3rd edn., *Oriental Institute*, Baroda, 1934.
36. *Sarasvatī-kaṇṭhābharaṇa of Bhoja:* Ed. Anandram Borooah; *Publications Board*, Assam, 2nd reprint, Gauhati, 1969.
37. Fragments from Bhaṭṭa Tota's *Kāvya-kautuka*: collected from Hemacandra and Sridhara's commentary on *Kāvyaprakāśa*, Abhinavagupta etc.
38. *Kāvyānuśāsana of Hemacandra:* vol. I, Ed. Rasiklal C. Parikh; *Mahavir Jain Vidyalaya*, Bombay, 1938.




39. *Nāṭaka-lakṣaṇa-ratnakośa of Sāgaranandin*: vol. I, Ed., Myles Dhillon; *Oxford University Press,* London, 1937.
40. *Rasagaṅgādhara of Jagannātha:* Ed., Durgaprasad Dwivedi, *Nirnaya Sagar Press*, Reprint: *Motilal Banarsidass,* Delhi, 1983.



The compiler-cum-editor Professor K. Krishnamoorthy (b. 1923) is a renowned scholar and academician. Besides being a prolific writer in English and Kannada he is an authority in Indian poetics. His recently published book on *Kālidāsa* substantiates his mastery over Indian aesthetics thought. His well-known publications include *Dhvanyāloka* text critically edited (1982) *Vakroktijīvita* text critically edited (1977), monograph on *Bāṇabhaṭṭa* (1977) and independent works like *Essays in Sanskrit Criticism* (1974), *Studies in Indian Aesthetics and Criticism*(1979) and critical editionsofBharata's *Nāṭyaśāstra* with *Abhinavabhāratī.*

ISBN 81-7201-776-6

# साहित्यरत्नकोशः
## Treasures of Sanskrit Literature

## TITLES PUBLISHED UNDER THE SERIES

**वेदशास्त्रसंग्रहः** (Selections from Vedic and Sastraic Texts) Vol I (1966) Ed. Acharya Vishva Bandhu; pp. xxxix, 381; Rs. 15.

**पुराणेतिहाससंग्रहः** (Selections from the *Māhābhārata,* the *Rāmāyaṇa* and the *Purāṇas*) Vol II (1959) Ed. S.K. De and R.C. Hazra; pp. xiv, 353; Rs. 10. (cloth bound), Rs. 7.50 (Popular).

**बौद्धसंग्रहः** (Selections from Buddhist Sanskrit Texts) Vol III (1962) Ed. Nalinaksha Dutt; pp. xxviii, 143; Rs. 10 (cloth bound), Rs. 7.50 (Popular).

**गद्यसंग्रहः** (Anthology of *Champus*, historical romances, *kathas* & fables) Vol-IV Part-II (1994) Ed. P. Shri Ramachandrudu; pp X, 361; Rs 150, ISBN - 81 7201-512-7

**काव्यनाटकसंग्रहः (प्रथमो भागः)** (Selections from Poetry and Drama-Part II-Drama and Supplement to Part I Poetry) Vol V (1977) Comp. V. Raghavan, pp. xviii, 288

**अभिलेखसंग्रहः** (An Anthology of Sanskrit Inscriptions) Vol VI (1964) Comp. & Ed. Bahadur Chand Chhabra; pp. xxiv, 104, Rs. 8.50 (cloth bound), Rs. 7 (Popular).

**सुभाषितसंग्रहः (प्रथमो भगः)** (Selections of *Subhāṣitas* from the *Upaniṣads*, the *Mahābhārata* and the *Purāṇas*) Vol VII Part I (1971) pp. xvi, 348 (Out of Stock)

**सुभाषितसंग्रहः (द्वितीयो भागः)** Vol. VII Part II (1982) Ed. V. Raghavan; pp. xxvi, 332; Rs. 30.

**जैनसंग्रहः** (Selections from Jain Prakrit and Sanskrit Texts ) (1980) Ed. V.M. Kulkarni; pp. xxxvi, 236, Rs. 30.

**वेदाख्यानकल्पद्रुमः** (Selections from *Brāḥmaṇas, Saṃhitas* and *Upaṇiṣads)* Vol. IX (1992) Ed. Vidya Niwas Misra; pp xvi, 184; Rs. 70, ISBN 81 7201 201 2